


श्री भास्कररायविरचितः

# शिवनामकल्पलतालवालः

# ŚIVANĀMAKALPALATĀLAVĀLA
OF
# ŚRĪ BHĀSKARARĀYA

*General Editor* :
Vidwan Dr. H. P. MALLEDEVARU, M.A., Ph.D.

*Editor* :
Vidwan H. V. NAGARAJA RAO, M.A.



प्राच्यविद्यासंशोधनालयः
ORIENTAL RESEARCH INSTITUTE, MYSORE
1985

*Price* : Rs. 13–00

UNIVERSITY OF MYSORE
ORIENTAL RESEARCH INSTITUTE, SERIES No. 146

मैसूरुविश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला – १४६

# SHIVANAMAKALPALATALAVALA

OF

SRI BHASKARARAYA

with the commentary

SUDHAPURA

of

SRI VENKATACHALA PANDITA

श्री भास्कररायकृतः

# शिवनामकल्पलतालवालः

श्रीवेङ्कटाचलपण्डितकृतया सुधापूराख्यया सहितः

ORIENTAL RESEARCH INSTITUTE
MYSORE

1984

मैसूरुविश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला – १४६

श्रीभास्कररायकृतः

# शिवनामकल्पलतालवालः

श्रीवेङ्कटाचलपण्डितरचितया सुधापूरव्याख्यया सहितः

# SHIVANAMAKALPALATALAVALA

BY

**BHASKARARAYA**

CRITICALLY EDITED BY

**Vidwan H. V. NAGARAJA RAO, M.A.**
Research Assistant,
Oriental Research Institute, Mysore

प्राच्यविद्यासंशोधनालयः
मैसूरुविश्वविद्यानिलयः, मैसूरु

ORIENTAL RESEARCH INSTITUTE, MYSORE

1984

## FOREWORD

It is a matter of immense pleasure to present 'Shivanamakalpalatalavala' of Sri Bhaskararaya with the commentary 'Sudhapura' of Sri Venkatachala Pandita to the world of scholars. It is hoped that the present work will be warmly welcomed by the Sanskritists in general and devotees of Lord Shiva in particular.

**The Work :** 108 divine names of Shiva enumerated in the Skandapurana, Sivarahasya etc., are well known. Saivites hold these names in high esteem and consider Siva's worship with these names a way to attain all wishes including supreme emancipation. Hence, this string of 108 names (Ashtottarasatanamavali) is called 'Kalpalata' i.e., a wish-fulfilling creeper. Sri Bhaskararaya, the author of the present work, has made a basin, as it were, for that creeper in 108 verses. Hence the name of the work. The speciality of the work also lies in the fact that each of the verses has been composed in different metres, i.e. 108 metres have been used in the work. Thus a study of this work produces not only 'merit' but also a knowledge of Sanskrit prosody. The verses are pregnant with meaning and also possess exquisite charm.

**The Author :** Sri Bhaskararaya, author of the present work, was a great scholar and prolific writer. He was well-versed in many branches of Sanskrit Literature like Advaita, Purvamimamsa,

Mantrashastra etc. He has written more than forty works, a list of which is given in the Sanskrit Introduction. The most famous and popular of these works is 'Saubhagyabhaskara', a commentary on the Lalitasahasranamastotra. Bhaskararaya lived in the seventeenth century A.D. as indicated by himself at the end of some of his works. He was the second son of Gambhirabharathi and Konamamba, who lived in the Maharastra region. Bhaskararaya attained erudition in Tantrasastra and got the **diksha** name 'Bhasuranandanatha' after initiation. He lived mainly in Benaras and moved to South India in his ripe old age. The Maratha kings of Tanjore became his disciples and a village was granted to him by the Kings. It came to be called 'Bhaskarapura' after him.

Jagannathapandita, a disciple of Sri Bhaskararaya, has written a poem called "Bhaskaravilasa" to extol his preceptor. This work gives ample details of the literary achivements of Sri Bhaskararaya.

**The Commentary:** The work contains many stanzas which are difficult and hence a commentary is quite essential to bring out the hidden meaning. Besides, very rare metres are also used which are not commonly known. This prompted one Venkatachalapandita to write a lucid commentary. The present edition contains this commentary which has been published for the first time.

Venkatachala, whose personal details are not known was however a good scholar in many fieids, and especially so in the Agamas and Puranas as evident in the present commentary. It is aptly named 'Sudhapura' (filling up with divine nectar or a flood of ambrosia) since it is supposed to fill the basin (aĺavala) at the root of the kalpalata. The commentary quotes profusely from the Puranas and other works.

The metres are defined and explained mainly according to Pingala's Chandasshastra, and in a few cases according to other works. Quite often, Venkatachala gives the grammatical analyses of the words used by the poet (Bhaskararaya). So, there is no doubt that this commentary will be very useful to students also.

The editor Vidwan H. V. Nagaraja Rao has striven much in preparing the present edition. Our Institute possessed only one manuscript of this work. Later, another manuscript of the work was fortunately obtained from Sri Kudli Sringeri Matha. This stimulated the interest in publishing this work. While the editing was in progress, Sri M. S. Basavarajaiah, Senior Research Assistant of this Institute, came across another manuscript of this work and was kind enough to lend the same for collation. This proved to be of immence value. Hence the Institute is indebted to him.

The munificent grant from the Government of India and Government of Karnataka has made it possible to bring out the following publications :

1) Shivatattva ratnakara (Vol. III)
2) Nyayamanjari (Vol. II)
3) Descriptive Catalogue (Vol. IX)
4) Vatulashuddhagama (Vol. I)
5) Yogashataka
6) Vatulashuddhagama (Vol. II)
7) Brahmasutrabhasya (Vol. I)
8) Madhaviya dhatuvrutti (Vol. I)
9) Brahmasutrabhasya (Vol. II)
10) Bodhayanagrihyasutra
11) Raghunathavijaya
12) Shivanamakalpalatalavala
13) Descriptive Catalogue (Vol. X)

and the following books are in the Press :

1) Siddhanta Siddhanjana
2) Trivenika
3) Tarkatandava
4) Viragama
5) Descriptive Catalogue (Vol. 7A)
6) Anubhasya with commentaries
7) Arthashastra of Kautilya
8) Vruttaratnavali
9) Apastamba Srautasutra
10) Pancatantra sangraha
11) Veeragama (Vol. II)
12) Descriptive Catalogue (Vol. XI)

The Ford Foundation has been giving financial aid to the Oriental Research Institute to acquire the latest Microfilm Equipment and to conduct a Manuscript Conservation Programme. I wish to express our gratitude to the benevolent authorities of the Ford Foundation, New Delhi. So far the Institute has acquired the Dokumator Microfilm Camera from West Germany and the Hirakawa 35 Portable Microfilm Camera from Japan with the Ford Foundation's Aid. Other equipments will also be acquired shortly and the Institute will have a well-equipped Microfilm Section which will enable us to microfilm precious manuscripts and to meet the demand of the scholars of both India and abroad for microfilm copies of valuable manuscripts.

I wish to record here our thanks to Prof. K. S. Hegde, Vice-Chancellor and Sri V. C. Hullur, I.A.S., Registrar, University of Mysore for their encouragement to the research work of our Institute. The members of the Syndicate, University of Mysore and the Advisory committee, Oriental Research Institute, also deserve our gratitude for their kind support to our publications. The Director, Mysore University Printing Press and the Proprietor, Charitra Printers, Mysore have actively worked for bringing out this work for which I express sincere thanks to them.

H. P. MALLEDEVARU

# प्रस्तावना

'श्री भासुरानन्दनाथ' इति दीक्षानामशालिनः श्री भास्कररायस्य 'शिवनामकल्पलतालवाल'नाम्नीं कृतिं श्री वेङ्कटाचलपण्डितरचितया सुधापूराख्यया व्याख्यया साकं विद्वद्भ्यः समर्पयितुं महान् प्रमोदो जायते। शिवभक्त्यतिशयेन, कविताप्रौढिम्ना, पाण्डित्योत्कर्षेण च भ्राजमानेयं कृतिः समेषामपि देवभाषाविदां प्रीतिभाजनं भविष्यति इति च द्रढीयानस्माकं विश्वासः।

## श्री भास्कररायः

श्रीशिवनामकल्पलतालवालाख्यस्य स्तोत्ररत्नस्य कर्ता श्रीभास्कररायः देवभाषाविदां, तत्रापि विशेषेण तन्त्रशास्त्रे कृतपरिश्रमाणां सुविदितः। श्रीललितासहस्रनामस्तोत्रस्य भाष्यं '**सौभाग्यभास्कर**' इति विख्यातं को वा न जानाति? '**वरिवस्यारहस्यम्**' इति च तन्त्रशास्त्रीयो ग्रन्थमणिः सर्वत्र प्रथते। अस्य च कालदेशकृतिमहिमादिविषये तत्तद्ग्रन्थान्तोपलभ्यानि समाप्तिवाक्यानि, तथा भास्कररायशिष्येण उमानन्दनाथापराभिधानेन जगन्नाथपण्डितेन रचितो '**भास्करविलास**' इति प्रथितो ग्रन्थश्च प्रमाणम्।

तथाहि। प्रकृतग्रन्थस्यान्तिमश्लोकात् —

इति काशिनिवासिसाग्निचित्यक्रतुकृद्भास्कररायभारती।
जनुषः सफलत्वसिद्धये शिवनामाष्टशतं व्यवर्वरीत्॥

इत्यस्मादस्य कर्ता श्रीमान् भास्कररायः काशीपुरनिवासीति ज्ञायते। तथैव **नित्याषोडशिकार्णवव्याख्यानस्य सेतुबन्धस्य** आदौ दृश्यमानात् —

श्रीगम्भीरविपश्चितः पितुरभूद् यः कोनमाम्बोदरे
विद्याष्टादशकस्य मर्मभिदभूद् यः श्रीनृसिंहाद्गुरोः।

यश्च श्रीशिवदत्तशुक्लचरणैः पूर्णाभिषिक्तोऽभवत्
स त्रेता त्रिपुरा त्रयीति मनुते तामेव नाथत्रयीम् ॥

वामकेश्वरतन्त्रस्थे नित्याषोडशिकार्णवे ।
पूर्वोत्तरचतुश्शत्यौ व्याचष्टे भास्करः सुधीः ॥

इति श्लोकद्वयात् कर्तुः भास्कररायस्य पिता गम्भीरभारती, माता कोनमाम्बा, विद्यागुरुः श्रीनृसिंहः, तन्त्रशास्त्रदीक्षाकारः श्रीशिवदत्तशुक्लः इति च विज्ञायते ।

एवं भास्कररायस्य मुख्यकृतौ **वरिवस्यारहस्ये**ऽपि अन्तिमवाक्यं दृश्यते—

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीण-सर्वतन्त्रस्वतन्त्रश्रीनृसिंहानन्दनाथचरणारविन्दमिलिन्देन श्रीमद्गम्भीररायभारतीदीक्षितात्मजेन भास्कररायापरनाम्ना भासुरानन्दनाथेन प्रणीतं सव्याख्यानं वरिवस्यारहस्यं सम्पूर्णम् ।

अपि च श्रीभास्कररायस्य साक्षाच्छिष्यः श्रीमान् जगन्नाथपण्डितः, उमानन्दनाथ इति दीक्षानाम्ना च प्रथितः, स्वगुरोर्वैभवं लोके ख्यापयितुं '**भास्करविलास**' इति ग्रन्थं जग्रन्थ । स चायं ग्रन्थो ललितासहस्रनामभाष्येण साकं मुद्रितः प्रकाशितश्च निर्णयसागरमुद्रणालयात् (१९१४ तमे वर्षे) । अस्माद् ग्रन्थाद् भास्कररायस्य वैदुषी सम्यग्ज्ञायते । अपि चात्रत्यात्—

स एष गङ्गाधरवाजपेयिसकाशतः साधितगौडतर्कः ।
गङ्गावगाहाद्विरजाः पितॄणां गतोऽनृणत्वं सुकृती गयायाम् ॥ (२०)

इति पद्यात् वङ्गदेशजात् गङ्गाधरवाजपेयिनः भास्कराचार्यस्तर्कशास्त्रमध्यगीष्टेति ज्ञायते ।

उत्तरत्र दृश्यमानाभ्याम्—

काश्यां जज्ञे सोमपीथी यथावत्
कालं कञ्चित्तत्र कृत्वा निवासम् ।
शिष्यस्यासौ चन्द्रसेनस्य राज्ञः
सेवातुष्ट्योवास कृष्णोपकण्ठम् ॥ (३३)

यादववंशैकमणिः यो भोसलभूभृतां चमूनाथः ।
श्रीगुरुचरणोपास्तौ स्वयमेव प्रापदुपमितिं स्वस्य ॥ (३४)

इति पद्याभ्यां चन्द्रसेनाख्यो राजा, भोसलाख्यो राजा च श्रीभास्कररायस्य शिष्यावास्ताम् इति ज्ञायते । अपि च वाराणस्यां लब्धजन्मा बहुत्र लब्धविद्यः कृष्णानद्याः समीपे वासं चकारेत्यपि ज्ञायते । अपि च तत्रैव (भास्करविलासकाव्ये) दृश्यमानेभ्यः—

चक्रेशमस्थापयदेष काश्यां गम्भीरनाथं किल कोङ्कणेषु ।
मूलह्रदे श्रीमति पाण्डुरङ्गं वज्रेश्वरं नाम च सेतुबन्धे ॥
संनतिमान् नाथपदो संनतिनाम्नीह विश्रुते क्षेत्रे ।
चक्रे स मन्दिरं श्रीचक्राकारेण चन्द्रलाम्बायाः ॥
बहोः कालात् खिलाशेषमदो चोलेषु नीवृति ।
कहोळेशमसौ चक्रे महोत्सवनिरन्तरम् ॥

इति पद्येभ्यः असौ भास्कररायमखी भारते वर्षे बहुत्र कृतसञ्चारः अनेकेषु क्षेत्रेषु बह्वीर्देवताः प्रत्यतिष्ठिपत् इति वेद्यते । अस्य भार्याऽपि तथा देवकार्येषु प्रसितासीदिति —

साध्वी तदग्रसुदती सह्यसुतातीरभूपरिष्कारे ।
भास्करपुरेऽग्रहारे बद्धावृति भास्करेश्वरं न्यधित ॥

इति पूर्वोक्तग्रन्थस्थात्पद्यादेवावगम्यते । तथैव जीवितस्यान्तिमे काले भास्करराय: सह्यसुतायाः (कावेर्याः) तटे उवासेति च वक्तुं शक्यते । तञ्जावूरुप्रान्ते तदा शासनं कुर्वाणः भोसलेमहाराजः स्वनगर्याः समीपे स्थितं अग्रहारं भास्कररायाय प्रादात्, तदेवाद्यापि भास्करपुरमिति विद्योतते इत्यपि विद्वांसो वदन्ति । एतत् सर्वं संगृह्य श्रीमद्भिः आर्. कृष्णस्वामिशास्त्रिभिः भास्कररायस्य जीवनम् आंग्लवाण्यां न्यरूपीत्थम्[1]—

गम्भीररायनामा विश्वामित्रगोत्रो विप्रो वाराणस्यां वसति स्म । सः विद्यया, विनयेन, चरित्रेण मनीषावैभवेन वित्तविस्तारेण च विख्यातोऽभवत् । विजयनगर (?) राज्यस्य कश्चन महीपालो गम्भीररायं स्वस्थाने महाभारत-व्याख्यानाय न्ययुंक्त । गम्भीररायस्य वैदुष्येण स राजा नितान्तमतुष्यत् भारतीत्युपनाम च तस्य चकार । गम्भीररायस्य भार्या कोनमाम्बा भागा-नगर्यां भास्कररायं सुषुवे । पित्रोपनीतो भास्करो श्रीनृसिंहाध्वरिणः सन्निधिं प्रापितो विद्याभ्यासार्थम् । तस्माद् गुरोर्भास्करोऽष्टादशापि विद्या अध्यगीष्ट ।

ततो गङ्गाधरवाजपेयिनाम्नो गुरोर्गौडतर्कं भास्करोऽभ्यस्तवान् । ततोऽयं गृहस्थाश्रमी भवितुं 'अनन्दी 'नाम्न्याः पाणिमग्रहीत् । कालक्रमेण 'पाण्डुरङ्ग ' नाम्ना शिशुना पुत्री बभूव ।

अथर्ववेदं कारणान्तरेण प्रचारहीनं दृष्ट्वा खिन्नो भास्कररायो महता श्रमेण तं वेदम् अध्यगीष्ट, बहून् ब्राह्मणांश्च तमध्यापयामास । देवी-भागवतमहापुराणं रामायणस्याष्टमकाण्डं (अद्भुताख्यं) च लोके प्रसार्य जन-प्रियमकरोत् । स्वभार्यामपि श्रीविद्यापरिणतां कृत्वा तस्यै पद्मावत्यम्बिकेति नूतनं नाम प्रादात् । शिवदत्तशुक्लाख्यो गुरुर्भास्कररायं पूर्णाभिषिक्तं

---

1 Introduction to Varivasyarahasya edited by Pandit S. Subrahmanya Shastri, published by The Adyar Library, Adyar (Madras), 1941, pp xxix—xxxiii

चकार । गुर्जरदेशे ज्ञानयात्रां कृत्वा तत्र वल्लभसंप्रदायस्थं कञ्चन विद्वांसं पराजितमकरोत् । माध्वसंप्रदायस्यापि कश्चन संन्यासी वादे पराजितोऽभूत्, ततस्तस्य बान्धवीं पार्वतीनाम्नीं कन्यां भास्कररायः पर्यणैषीत् । वाराणस्यां सोमयागं चाकार्षीत् । स्वल्पकालानन्तरं शिष्यस्य चन्द्रसेनाख्यस्य राज्ञः प्रार्थनामादृत्य कृष्णानद्यास्तटे कियन्तमपि कालमवात्सीत् । ततः सः चोलदेशमयासीत् । तत्र कावेर्या दक्षिणे तीरे तिरुवालन्काडुनाम्नि ग्रामे भास्कररायस्य न्यायशास्त्रगुरुः गङ्गाधरवाजपेयी न्यवात्सीत् । तत्समीपे कावेर्या उत्तरतीरे भास्कररायः मरहट्टभूपालेन विश्राणिते 'भास्कर राजपुरम्' इति प्रथिते ग्रामे निवासमकार्षीत् । अन्ततोऽयं विद्वत्तल्लजो मध्यार्जुनाख्ये क्षेत्रे जराजर्जरितं पार्थिवं शरीरं व्यसाक्षीत् ।" इत्यादि ।

## ग्रन्थकर्तुः कालः

श्रीमतो भास्कररायस्य कालो नातीव क्लिष्टो निर्धारयितुम् । यतो हि तेनैव विद्वत्तल्लजेन तत्र तत्र ग्रन्थेषु तत्समाप्तिकालो निरदिश्यत । यथा ललितासहस्रनामभाष्यस्य (सौभाग्यभास्करस्य) अन्ते तेन निर्दिश्यते—

श्रीविश्वामित्रवंश्यः शिवभजनपरो भारती सोमपीथी
काश्यां गम्भीरराजो बुधमणिरभवद्भास्करस्तस्य सूनुः ।
मोदच्छायामितायां शरदि शरदृतावाश्विने कालयुक्ते
शुक्ले सौम्ये नवम्यामतनुत ललितानामसाहस्रभाष्यम् ॥ इति ।

एतदनुसारेण ललितासहस्रनामभाष्यं १७८४ तमे संवद्वत्सरे व्यरचि । एतच्च १७४१ तमेन क्रिस्तवर्षेण (1741 A.D.) संगच्छते । एवं च अष्टादशशतकस्य (18th Century A.D.) पूर्वार्धे श्रीमान् भास्कररायः साहित्यरचनाव्यापृत आसीत् इति निर्विवादं वक्तुं शक्यते । सेतुबन्धादिषु ग्रन्थेषु निर्दिष्टानि दिनानि च अमुमेव निर्णयं समर्थयन्ते ।

## श्रीभास्कररायस्य कृतयः

श्रीमान् भास्कररायः श्रेष्ठः कविः, उत्तमो दार्शनिकः, अप्रतिमस्तान्त्रिकः, भूयश्शास्त्रज्ञश्च इत्युक्तचरम्। अतस्सन्ति भूयिष्ठाः कृतयोऽस्य शास्त्रेष्वनेकेषु। एतासां नामानि भास्कररायशिष्येण जगन्नाथपण्डितेन **भास्करविलासे** समुल्लिखितानि। तासु काश्चिन्मुद्रिताः, काश्चित् तालपत्रेष्वेव वर्तन्ते, काश्चिन्नाममात्रेण ज्ञाताः। यथा—

a) वेदान्ते (१) चण्डभास्करः
(२) नीलाचलचपेटिका

b) पूर्वमीमांसायाम् (३) वादकौतूहलम्
(४) भाट्टचन्द्रोदयम्

c) व्याकरणे (५) रसिकरञ्जनी (मध्यसिद्धान्तकौमुदीव्याख्या)

d) न्याये (६) न्यायमण्डनम्

e) छन्दश्शास्त्रे (७) छन्दोभास्करः
(८) छन्दःकौस्तुभः
(९) वृत्तचन्द्रोदयः
(१०) वार्तिकराजः
(११) मृतसंजीविनी
(१२) छन्दोभाष्यराजः

f) काव्ये (१३) चन्द्रशाला
(१४) मधुराम्लम्
(१४) भास्करसुभाषितम्

g) धर्मशास्त्रे (१६) स्मृतितत्त्वम्
(१७) सहस्रभोजनखण्डटीका
(१८) शङ्खचक्राङ्कनप्रायश्चित्तम्
(१९) एकादशीनिर्णयः

(२०) प्रदोषभास्करः
(२१) तृचभास्करः
(२२) कुण्डभास्करः

h) स्तोत्रसाहित्ये (२३) शिवनामकल्पलतालवालः
(२४) शिवस्तवः
(२५) शिवदण्डकम्
(२६) देवीस्तवः

i) मन्त्रशास्त्रे (२७) खद्योतः (गणपतिसहस्रनामभाष्यम्)
(२८) चन्द्रलाम्बामाहात्म्यव्याख्या
(२९) नाथनवरत्नमालामंजूषा
(३०) भावनोपनिषद्भाष्यम्
(३१) श्रीसूक्तभाष्यम्
(३२) कौलोपनिषद्भाष्यम्
(३३) त्रिपुरोपनिषद्भाष्यम्
(३४) सौभाग्यभास्करः (ललितासहस्रनामभाष्यम्)
(३५) सौभाग्यचन्द्रोदयः
(३६) वरिवस्यारहस्यम्
(३७) प्रकाशः (वरिवस्यारहस्यटीका)
(३८) त्रिपुरसुन्दरीबाह्यवरिवस्या
(३९) रत्नालोकः (परशुरामकल्पसूत्रव्याख्या)
(४०) गुप्तवती (दुर्गासप्तशतीटीका)
(४१) सप्तशती
(४२) मालामन्त्रोद्धारः
(४३) सेतुबन्धः (वामकेश्वरतन्त्रव्याख्या)
(४४) वैदिककोषः

उपर्युक्ताः कृतयो जगन्नाथपण्डितेनोल्लिखिताः, भास्कररायैश्च काश्चन कासुचिदन्यासु कृतिषु नाम्नोल्लिखिताः । आफ्रेक्ट् (Aufrecht) महाशयोऽन्या अपि काश्चन कृतीः भास्करीयत्वेन निर्दिशति ।

यथा—संख्या (पूर्वतोऽनुस्रियते)

(४५) काठकोपनिषद्भाष्यम्
(४६) केनोपनिषद्भाष्यम्
(४७) जाबालोपनिषद्भाष्यम्
(४८) महोपनिषद्भाष्यम्
(४९) मुण्डकोपनिषद्भाष्यम्
(५०) अभिनववृत्तरत्नाकरः
(५१) अवधूतगीताव्याख्या
(५२) अष्टावक्रगीताव्याख्या
(५३) आत्मबोधव्याख्या
(५४) ईश्वरगीताव्याख्या
(५५) कन्यकापुराणम्
(५६) चण्डीस्तवमन्त्रपरिच्छेदः
(५७) त्रिपुरामहिमटीका
(५८) मन्त्ररत्नावली
(५९) मन्त्रविभागः
(६०) ललितार्चनाविधिः
(६१) शब्दकौस्तुभदूषणम्
(६२) श्रीविद्यार्चनचन्द्रिका
(६३) सिद्धान्तकौमुदीविलासः

एतासु आफ्रेक्ट्समुल्लिखितासु कृतिषु कति गम्भीररायसूनु भास्कररायेण विरचिताः, कति वा भास्कररायनामकैरन्यैर्विरचिताः, इति न जानीमहे ।

तत्तद्ग्रन्थानां समुपलम्भे एवैतद्विषये किमपि निश्चप्रचं वक्तुं शक्यते। श्रीमान् भास्करराय: उपर्युक्तेभ्योऽपि ऋते इतराणि मुक्तकपद्यानि चारचयदिति विज्ञायते। जगन्नाथपण्डितो भास्करविलासे—

असंख्याता हि कृतय: संख्याता अपि विष्टपे।
संख्यातुं केन शक्यन्ते संख्यावच्चक्रवर्तिन: ॥
तत्सार्वज्ञ्योपज्ञकानि प्राज्ञहृद्यानि कानिचित्।
अद्याहमनवद्यानि पद्यानि प्रतिपादये ॥

इत्यभिधाय बहूनि पद्यानि प्रतिपादयति। एवं च विशालोऽस्य भास्कररायस्य साहित्यप्रपञ्च इति विषयो निस्संशय:।

**शिवनामकल्पलतालवाल:**

इदानीं सव्याख्यं प्राकाश्यमानीयमानो ग्रन्थ: 'शिवनामकल्पलतालवाल:' श्रीभास्कररायस्य ग्रन्थेष्वन्यतम:। अस्य स्तोत्रस्य 'शिवनामकल्पवल्ल्यालवाल:' इति, 'शिवनामकल्पलतारत्नावाल' इति चान्ये नाम्नी स्त:। अस्य स्तोत्रस्य विषयो श्रीपरमशिवस्याष्टोतरशतनाम्नां महिम्नों वर्णनैव। **शङ्करसंहितायां शिवरहस्ये** च प्रतिपादितानां शिवस्याष्टोत्तरशतनाम्नां महिमात्र श्रीभास्कररायेण वर्णित:। एकैकं नामैकेन पद्येन ग्रन्थकर्त्रा सोपपत्ति सप्रमाणं च निरूप्यते। महान् शिवभक्ताग्रणी: बहुश्रुतो भास्करराय: अष्टोत्तरशतनाम्नामपि वेदमूलत्वं दर्शयति।

अयमपरोऽपि विशेष:। अत्रत्यानि अष्टोतरशतसंख्यानि पद्यानि विभिन्नै: (तावत्संख्यै:) छन्दोभि: विरचितानि। एतत् श्रीमतो भास्कररायस्य देववाण्यां प्रभुत्वं, छन्दश्शास्त्रप्रावीण्यं च समुद्द्योतयति। पाठकानां च पुण्यप्राप्त्या साकं विविधच्छन्दोज्ञानलाभ: प्रयोजनान्तरम्।

उक्तं हि ग्रन्थकारेणैव—

इयं शम्भोरष्टोत्तरशतकनामार्थविवृति-
र्विजातीयैरष्टोत्तरशतकवृत्तैर्विरचिता ।
फलं नाम स्वार्थावगतिषु च भूम्नैम विदितं
बहूनां वृत्तानां प्रमितिरधिकाप्यत्र फलति ॥ इति ।

भारतवर्षे स्थितेषु बहुषु पुण्येषु शिवक्षेत्रेषु कस्मिन् केन रूपेण शिवोऽर्चनीय इति च श्रीभास्कररायो निरूपयति ।

## भास्कररायस्य दार्शनिकी चित्तभूमिः

भास्कररायो वैदिकमार्गानुसारी कर्मठश्चासीत् । अत एव तस्य भास्कररायदीक्षितः, भास्कररायमखी, अग्निचित् इत्यादीनि नामानि प्रथन्ते । सः श्रीशङ्कराचार्योपदिष्टे अद्वैते निष्ठावान् आसीदिति च तद्ग्रन्थावलोकनतः स्पष्टं भवति । तन्त्रमन्त्रशास्त्रे अप्रतिमां वैचक्षणीं चासौ प्राप्तवान् । अत एवास्य विषये बहून्यैतिह्यानि प्रसिद्धानि । तत्रैकमुदाहरामः ।

मध्यार्जुनक्षेत्रे स्वगृहस्याङ्गणे श्रीमान् भास्कररायः समुपविष्टो विद्यार्थिनः शास्त्रार्थं बोधयति स्म । तदा कश्चन संन्यासी मार्गे गच्छति स्म । तदा भास्कररायः प्रत्युत्थायाभिवादनं नाकार्षीदिति संन्यासी तस्मै अकुप्यत् । महालिङ्गेश्वरस्वामिसन्निधौ एकदा प्रदोषपूजावेलायां भास्कररायं दृष्ट्वा संन्यासी कलहायितुमारब्धवान् । तदा भास्कररायोऽवदत्— "यद्यहं भवन्तमभिवादये, तर्हि भवत्प्राणाः न शिष्येरन्" इति । क्रुद्धः संन्यासी तत्सर्वं कृत्वा दर्शनीयम् इति आगृह्णात् । तदा भास्कररायः "कृपया दण्डकमण्डलू अत्र भूमौ निक्षिप्येताम्" इत्यवादीत् । तथा संन्यासिना

कृते सति भास्करराय: तौ प्राणंसीत् । सहसा तौ शतधा अभिद्येताम् । चकित: संन्यासी भास्कररायमहिमानं ज्ञात्वा क्षमामयाचत ।

इदमैतिह्यं सत्यं वा न वेति न जानीमहे । किन्त्वेतेन श्रीभास्कररायस्य महाप्रभावता निश्चप्रचं सूच्यते ।

एवमद्वैतदर्शने श्रद्दधान:, तन्त्रशास्त्रे पारङ्गत: सन् भास्करराय: शिवमेव परमात्मनं मन्वानस्तमसेवत । अत एव तेन बहव: शिवालया: उज्जीविता: । शिवपारम्यप्रतिपादकाश्च स्तवा: व्यरच्यन्त । तथापि न स देवतान्तरद्वेषी । तेन हि हरिहरावुभावपि मुक्तकपद्येषु स्तुतौ ।

यथा—

शिर:स्थशशलक्षणं त्रिपुरदैत्यसंतक्षणं
दुरन्तविषभक्षणं सुरनिकायसंरक्षणम् ।
नरीनरविलक्षणं रविकृशानुचन्द्रेक्षणं
स्मरार्दनविचक्षणं परशिवं भजेऽनुक्षणम् ॥

चायं चायं दुरितनिचयं सीदतां वक्त्युपायं
पायं पायं शमितकलुषं कार्ष्णमम्भोऽनपायम् ।
ध्यायं ध्यायं विषयकटुतां भोश्चिरायोरुगायं
गायं गायं विहरत विभुं वेणुगोपालमाद्यम् ॥ इत्यादि ।

इदं सकलं श्रीभास्कररायस्य विशालहृदयतां च द्योतयति ।

## व्याख्या, सुधापूर:

श्रीभास्कररायविरचितस्य शिवनामकल्पलतालवालस्य ललितगम्भीरत्वात् तत्र तत्र व्याख्यासापेक्षता दृश्यते । वेङ्कटाचलाख्य: कश्चन सुधी: अस्य स्तोत्ररत्नस्य श्रेष्ठां सार्थकनाम्नीं सुधापूराख्यां व्याख्यां रचितवान् ।

यथोक्तं व्याख्यानान्ते —

शिवनामकल्पवल्ल्या भास्करकविरालवालमाबध्नात् ।
तद्वेङ्कटाचलसुधीः सुधाभिरापूरयामास ॥

श्रीवेङ्कटाचलपण्डितस्य विषये किमपि न ज्ञायते । स उत्तमः अन्तर्वाणिरासीदित्यत्र न विचिकित्सा । यस्माद्व्याख्यायां तस्य पाण्डित्यं सर्वत्र विजृम्भते । बह्वीः श्रुतीः, बहूनि पुराणानि, अनेकान् शास्त्रग्रन्थान् बहूनि काव्यवाक्यानि चोदाहरति ।

वेङ्कटाचलपण्डितः अष्टादशशतकस्योत्तरभागे एकोनविंशशतकस्यादि-भागे अवर्तिष्टेत्यूह्यते । यतः, तत्कृतेयं व्याख्या बहुत्र लब्धप्रचारासीदिति ज्ञायते । शिवदैवज्ञात्मजो रामचन्द्रः "शुद्धविग्रह" इत्यादीनि चत्वारि नामानि व्याख्यास्यन् आदौ वदतीत्थम्—

........श्रीमद्भास्कररायदीक्षिताग्निचित्परमेश्वरभक्ताग्रगण्य-कृतशिवनामनिर्वचनरत्नालवालाख्यस्तोत्रस्य विद्वच्चक्रचूडामणि-श्रीमद्वेङ्कटार्यप्रणीतसुधापूराभिधव्याख्या कृष्णातुङ्गोभयनदीमध्य-देशीयप्रत्यन्तरेषु शुद्धविग्रह इत्यारभ्याजान्तनामचतुष्टयस्य प्रमादाद् गलिता । एतन्नामचतुष्टयस्यैव सुधापूरो नास्तीति विचार्य लक्ष्मीपुरनिवासिश्रीमद्भारद्वाजकुलावतंसशिवदैवज्ञात्मज-रामचन्द्रेण श्रीमदुपासनामूर्तिकृपया श्रीसद्गुरुचरणारविन्दानुग्रहेण च यथामति नामचतुष्टयस्य कृता व्याख्या श्रीसाम्बचरणारविन्देऽ-र्पितेयं ........... इत्यादि ।

एतेन वेङ्कटाचलप्रणीता सुधापूरव्याख्या दक्षिणापथे द्रागेव प्रथां प्रापेति वक्तुं शक्यते । रामचन्द्रव्याख्यायुता हस्तलिखिता मातृका शालिवाहनशकस्य १७५८ तमे वर्षे लिखितेति तत्रैव स्पष्टमुल्लिखितम् । एतच्च

क्रि.श. १८३६ तमेन वर्षेण सङ्गच्छते। तावता कालेन वेङ्कटाचलसूरिकृतस्य सुधापूरस्य बहुत्र प्रचारः, केषुचित् प्रदेशेषु चतुर्णां पद्यानां व्याख्यायाः गलनं, तद्रिक्ततापूर्तये रामचन्द्रेण स्वव्याख्यायाः रचना चेति सर्वमभूदिति नूनं वेङ्कटाचलसूरिः अष्टादशशतकस्योत्तरार्धे अभूदिति वक्तुं शक्यते। तत्रापि अस्या व्याख्यायाः दक्षिणदेशे महान् प्रचार इति वेङ्कटाचलसूरिरपि दाक्षिणात्य इति प्रतीयते। यदि एतन्मातृकासूचितः कालो व्याख्यासमाप्तेरेव स्यात्, तर्हि वेङ्कटाचलपण्डितः एकोनविंशशतकस्य पूर्वार्धेऽभूदिति वक्तव्यं भवति।

**मातृकाः**

इदानीं प्रकाश्यमानस्य ससुधापूरस्य शिवनामकल्पलतालवालस्य आधारभूताः तिस्रो मातृकाः। सर्वा एताः कर्गजे (paper) लिखिताः। सर्वाश्च देवनागरीलिप्यां सन्ति। विशेषास्तु एते—

१) प्रथमा मातृका मैसूरुप्राच्यविद्यासंशोधनालये विद्यमाना, तिसृणामपि प्राचीनतमा, प्रायशः शुद्धा। बहुत्र कृमिभक्षितशरीरा। तत्र तत्र काश्चन पंक्तयो लेखकप्रमादाद् गलिता इव दृश्यन्तेऽस्याम्। अस्याः संख्या C 1327, पत्रसंख्या १२३, इयमेव मूलमातृका प्रकृतपरिष्करणे। अस्याः 'क' इति संज्ञा कृता।

२) इयं मातृका 'ख' इति संज्ञिता, पूर्वं श्रीकूडलिशृङ्गगिरिमठस्था, ततः प्राच्यविद्यासंशोधनालये प्रविष्टा। इयं पूर्णा, सुरक्षिता च। 'क'-मातृकायां यान्यक्षराणि न दृश्यन्ते, यानि वा सन्दिग्धानि तान्यत्र स्पष्टीभवन्ति। याश्च पंक्तयो लुप्ताः 'क' मातृकायां, ता अप्यत्र लभ्यन्ते। एवं च महान् उपकारो जातः परिष्करणे 'ख' मातृकया।

३) इयं मातृका 'ग' संज्ञिता श्रीमद्भ्यो एम्. एस्. बसवराजय्य-महाशयेभ्यो लब्धा । तेषां हस्तलिखितग्रन्थसंग्रहे स्थितेयं मातृका स्वतन्त्रेव विभाति । यस्मादस्यां मातृकायां मध्ये 'शुद्धविग्रहाय नमः' इत्यारभ्य चतुर्णां नाम्नां श्रीवेङ्कटाचलप्रणीतं व्याख्यानं नास्ति । तत्स्थाने श्रीरामचन्द्राख्येन पण्डितेन रचितैव व्याख्या वर्तते । अपि च वेङ्कटाचलप्रणीत-व्याख्यानेऽपि प्रतिपद्यं छन्दोनिरूपणावसरे वाक्यान्यत्र भिन्नानि दृश्यन्ते । मातृका परिष्करणकर्मणि बहूपकृतवती । रामचन्द्रप्रणीतं व्याख्यानं पृथगनुबन्धत्वेनान्ते संयोजितं द्रष्टव्यम् । अयं रामचन्द्रो भारद्वाजः, लक्ष्मीपुर-निवासीति च तद्वचनादेव ज्ञायते । मातृकान्ते लिपिकारोऽपि स्वनामादिक-मित्थमुल्लिखितवान्—

"लक्ष्मेश्वरस्थवसिष्ठगोत्रोत्पन्नपुराणिकोपनामकनारायणात्मजानन्तेन लिखितं ज्ञेयम्" इति । अस्यां मातृकायां कालोऽपि निरदिश्यत ग्रन्थान्ते यथा —

"स्वस्ति श्रीमन्नृपशालिवाहनशके १७५८ दुर्मुखिनामसंवत्सरे पुष्यकृष्णपक्षे चतुर्दश्यां शनौ वासरे श्रवणर्क्षे शिवाष्टोत्तरशत-दिव्यनामामृतस्तोत्रं सव्याख्यानं समाप्तम् ।"

इदं वाक्यं क-खमातृकयोर्नास्ति । तस्माल्लिपिकारेणैवैवं लिखित-मित्यूह्यते । तस्मादत्र सूचितः कालः (1836 A.D.) मातृकालेखन-समाप्तिकाल इति भावयामः । यदीदं वाक्यं वेङ्कटाचलपण्डितस्यैव स्यात्, यदि चान्ययोर्मातृकयोः प्रमादादिनास्य गलनं सम्भाव्येत, तर्हि व्याख्यारचन-स्यैवायं काल इति वक्तव्यम् इति पूर्वमेवावोचाम ।

इत्थं श्रीशिवाष्टोत्तरशतदिव्यनामस्तोत्रं सव्याख्यानं यथामति परिष्कृतं देवभक्तानां सन्निधावुपहरामः । अस्मिन् शुभतमे कर्मणि साह्यं कृतवतां

सर्वेषां, विशेषतो मातृकाप्रदानेन सातिशयमुपकृतवतां विद्वद्वर्याणां श्री एम्. एस्. बसवराजय्यमहाशयानां सम्पादकः कृतज्ञः । एतस्मिन् कार्ये यथाकालं प्रोत्साहमार्गदर्शनादिकं कृतवतां प्राच्यविद्यासंशोधनालयनिर्देशकानां चोपकारः स्मरणार्हः । ग्रन्थगुणवृद्धये सद्भिर्यदि सूचनाः दास्यन्ते, तर्हि ताः भविष्यत्परिष्करणे समुपयोक्ष्यन्ते ।

इति
सुधीविधेयः
एच्. वि. नागराजराव्
सम्पादकः

# श्रीशिवाष्टोत्तरशतनामावलिः

ओम् शिवाय नमः
,, महेश्वराय नमः
,, शम्भवे नमः
,, पिनाकिने नमः
,, शशिशेखराय नमः
,, वामदेवाय नमः
,, विरूपाक्षाय नमः
,, कपर्दिने नमः
,, नीललोहिताय नमः
,, शङ्कराय नमः
,, शूलपाणये नमः
,, खट्वाङ्गिने नमः
,, विष्णुवल्लभाय नमः
,, शिपिविष्टाय नमः
,, अम्बिकानाथाय नमः
,, श्रीकण्ठाय नमः
,, भक्तवत्सलाय नमः
,, भवाय नमः
,, शर्वाय नमः
,, त्रिलोकेशाय नमः
,, शितिकण्ठाय नमः
,, शिवाप्रियाय नमः
,, उग्राय नमः
,, कपालिने नमः

ओम् कामारये नमः
,, अन्धकासुरसूदनाय नमः
,, गङ्गाधराय नमः
,, ललाटाक्षाय नमः
,, कालकालाय नमः
,, कृपानिधये नमः
,, भीमाय नमः
,, परशुहस्ताय नमः
,, मृगपाणये नमः
,, जटाधराय नमः
,, कैलासवासिने नमः
,, कवचिने नमः
,, कठोराय नमः
,, त्रिपुरान्तकाय नमः
,, वृषाङ्काय नमः
,, वृषभारूढाय नमः
,, भस्मोद्धूलितविग्रहाय नमः
,, सामप्रियाय नमः
,, स्वरमयाय नमः
,, त्रयीमूर्तये नमः
,, अनीश्वराय नमः
,, सर्वज्ञाय नमः
,, परमात्मने नमः
,, सोमसूर्याग्निलोचनाय नमः

ओम् हविषे नमः
,, यज्ञमयाय नमः
,, सोमाय नमः
,, पञ्चवक्त्राय नमः
,, सदाशिवाय नमः
,, विश्वेश्वराय नमः
,, वीरभद्राय नमः
,, गणनाथाय नमः
,, प्रजापतये नमः
,, हिरण्यरेतसे नमः
,, दुर्धर्षाय नमः
,, गिरीशाय नमः
,, गिरिशाय नमः
,, अनघाय नमः
,, भुजङ्गभूषणाय नमः
,, भर्गाय नमः
,, गिरिधन्वने नमः
,, गिरिप्रियाय नमः
,, कृत्तिवाससे नमः
,, पुरारातये नमः
,, भगवते नमः
,, प्रमथाधिपाय नमः
,, मृत्युञ्जयाय नमः
,, सूक्ष्मतनवे नमः
,, जगद्व्यापिने नमः

ओम् जगद्गुरवे नमः
,, व्योमकेशाय नमः
,, महासेनजनकाय नमः
,, चारुविक्रमाय नमः
,, रुद्राय नमः
,, भूतपतये नमः
,, स्थाणवे नमः
,, अहये बुध्न्याय नमः
,, दिगम्बराय नमः
,, अष्टमूर्तये नमः
,, अनेकात्मने नमः
,, सात्त्विकाय नमः
,, शुद्धविग्रहाय नमः
,, शाश्वताय नमः
,, खण्डपरशवे नमः
,, अजाय नमः
,, पाशविमोचनाय नमः
,, मृडाय नमः
,, पशुपतये नमः
,, देवाय नमः
,, महादेवाय नमः
,, अव्ययाय नमः
,, हरये नमः
,, पूषदन्तभिदे नमः
,, व्यग्राय नमः

ओम् दक्षाध्वरहराय नमः
„ हराय नमः
„ भगनेत्रभिदे नमः
„ अव्यक्ताय नमः
„ सहस्राक्षाय नमः

ओम् अपवर्गप्रदाय नमः
„ अनन्ताय नमः
„ तारकाय नमः
„ परमेश्वराय नमः ॥

इति श्रीशिवाष्टोत्तरशतनामावलिः सम्पूर्णा

श्री जगन्नाथ द्विवेदी
२२-७-६५

श्रीभास्कररायविरचितः

# श्रीशिवनामकल्पलतालवालः

श्रीवेङ्कटाचलसुधीप्रणीतेन सुधापूराख्यव्याख्यानेन सहितः

(व्याख्यातृपीठिका)[1]

वेदान्तगीतविभवं पुरुषं पुराणमात्मानमाद्यमनघं करुणावतीर्णम् ।
यस्यावलम्बनवशाद्विलयं प्रयाति विघ्नान्धकारनिचयस्तमहं भजामि ॥१॥

आनन्दवनजानन्दलहरीजालनिर्भरः ।
मोक्षैकपदवीनाथः श्रीनाथोऽस्तु गतिर्मम ॥ २ ॥

अद्वैताब्धिगलत्सुधारसयुतैर्द्वैतप्रभावोद्भवैः
पद्यैः सूक्तिनिरुक्तिवाक्यरचनैर्न्यायामृताप्लावितैः ।
विद्याबोधनतः प्रसिद्धविभवान् विद्वत्समाजोल्लसद्-
गोपालेन्द्रयतीन्द्रपूज्यचरणान् श्रीबालपूर्वान् भजे ॥ ३ ॥

मुक्तापीतपयोदमौक्तिकजपावर्णैर्मुखैः पञ्चभिः
त्र्यक्षै[2]रञ्चितमिन्दुकुन्दधवलच्छायं निजाङ्गावृतम् ।
घण्टाशूलकृपाणपाशहुतभुट्टङ्काहिवज्राङ्कुशा-
भीतिद्योतकराब्जमण्डिततनुं वन्दे मुदे[3] शङ्करम् ॥ ४ ॥

---

[1] ग्रन्थारम्भे लिपिकारैः कानिचन नमस्कारवाक्यानि इत्थं लिखितानि दृश्यन्ते ।
'क'—श्रीमद्गुरुचरणारविन्दाय नमः
'क' 'ख'—श्री रसालमूलवासिने नमः
श्री शारदाम्बायै नमः
ग—श्रीगुरुभ्यो नमः । शिवनामकल्पवल्ली लिख्यते ।

[2] त्र्यक्षैः (ख) [3] कपुस्तके त्रुटितम् ।

स्कान्दाद्रौ शिवनामकल्पलतिकां रूढां पुमर्थैः फलै-
रानम्रामुपलभ्य भास्कर[1]मखी रत्नालवालं व्यधात् ।
वृत्तानां शतकं ससप्तदशकं यत्राभितस्त[2]त्सुधा-
सारैः पूरयति स्म वेङ्कटपतिः काशीपतिप्रीतये ॥ ५ ॥

काहं मूढः क्व शिवमहिमा भारतीभावदूरः
काहं शम्भोः परमधुरिमोद्दामनामस्तवेऽर्हः ।
स्वामिन् भूयो विषमविषया वैखरीयं मदीये-
त्यारम्भे[3]ऽस्मिन्नचल[4] गतिरस्त्वद्रिकन्यैव धन्या ॥ ६ ॥

इह खल्वखिलनिगमागमाद्यतिविस्तृतविविधविद्याप्रबन्धजालैरत्यन्तमनादिभावनैकबद्धाशयैश्चित्तप्र[5]शान्तिमलभमानान् प्रबलकलिमलकलुषीकृतस्वान्तान् जन्मवृद्धिजरामृत्युतापसन्तप्तचित्तविश्रान्तान् बहुतरविविधविषयाकरभवजलधिपतनभयादाकुलायमानबाह्यान्तरभावान् शान्त्यादिगुणयोग्यान् पुरुषधौरेयान् परितः पर्यालोच्य परमकृपालुः अखिलनिगमागमस्मृतिसूक्तसूत्रेतिहासविद्यान्यायमन्त्रतन्त्राद्यखिलसन्दर्शनसन्दर्भतत्त्वज्ञः श्रीमद्गम्भीररायभारतीदीक्षितार्यवर्यात्मकवैभवोल्लसितभारतीविलासास्पदश्रीमद्भास्कररायदीक्षिताग्निचित्[6] परमेश्वरभक्ताग्रगण्यः परमपावनीमशेषजनमनःसंह्लाद[7]कारिणीं समस्तकलिमलकलुषापहारिणीं संसारसागरोत्तारिणीम् अभिनवमनोहारिशिखरिणीमुखगणितहरिणप्लुतान्ताष्टशतवृत्तां तां परमशिवाष्टोत्तरशतामृत[8]नामशक्तिप्रतिपादिकां शिवनामनिर्वचनाढ्यां रत्नावालाख्यां[9] स्तुतिं प्रणिनीषुः तत्परिसमाप्ति-

---

[1] भास्वर (क) [2] यत्रोभितत्तत् (क) [3] त्यारेभे (क) [4] न्नवन (क), न्नवल (ख) [5] श्चितम (क) [6] वित् (क) [7] समाह्लाद (ख) [8] शतान्त (ख) [9] रत्नावल्या (क)

प्रतिबन्धकप्रत्यूहा[1]पोहाय परमपुरुषार्थसंप्राप्तये चाचरितं परमशिवप्रतिपा[2]दकं मङ्गलमशेषजनानुजिघृक्षया ग्रन्थतो निबध्नाति **मोक्षस्यैकेति**—

**मोक्षस्यैकनिदानमब्जनयनब्रह्मेन्द्रचन्द्रादिभि-**
**र्देवैः प्राणपदीकृतं कलिमलप्रध्वंसि धर्माङ्कुरः ।**
**भारत्यापि सुदुर्निरूपमहिम त्रय्यन्तरे गोपितं**
**वक्तुर्मङ्गलदं शिवेति विमलं नामैव नस्तारकम् ॥ १ ॥**

धर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थेष्वपि नित्यनिरतिशयानन्दावाप्ति-रूपमोक्ष एव परमपुरुषार्थः । "न स पुनरावर्तते, न स पुनरावर्तते" इति श्रुत्या तस्यैव परमत्वावगमादित्यतः तत्प्राप्तिसाधनमेवादौ दर्शयति **मोक्षस्यैकनिदानमिति** ।

मोक्षस्य सालोक्यसायुज्यसारूप्यसामीप्यकैवल्याख्यस्य पञ्चविधस्याप्य-पवर्गस्य एकं निदानम्, आदिकारणमित्यर्थः । अनितरसाधारणसाधन-प्राप्यत्वमाविष्कर्तुमेकेति । मुख्येत्यर्थः । मोक्षमुख्योपायत्वे मानमाह— **अब्जनयनेत्यादिना** । तथाच अनादिपुरुषोत्तमाब्जयोनिप्रभृत्यखिलसुरगणैः असाधारणफलकामैः अनन्यध्यानैकनिष्ठेन मनसा स्थिरीकृतमित्यर्थः ।

ननु अनादिवासनामलदूषितान्तःकरणानामाधुनिकजनवृन्दानां कथमत्र प्रवृत्तिः स्यादत आह— **कलीत्यादि** । कलिमलस्य कलिप्रयुक्तपापराशेः प्रध्वंसि मूलोच्छेदकारीत्यर्थः ।

ननु स्वयमेव तद्ध्वंसः? उत कारणान्तरसद्भावात्? नाद्यः । भजनप्रवृत्तिवैयर्थ्यात् । अतश्चरममाह— **धर्माङ्कुर इति** । तथा च

---

[1] लुप्तम् (क) [2] लुप्तम् (क)

"सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः" इति न्यायात् धर्माङ्कुरः स्वयमुत्पद्यमानस्तद्विरोधिलयपूर्वक एवोत्पद्यत इति भावः ।

ननु निरवधिकनिरन्तरानन्ददायिमङ्गलाकरपरमशिवनिजगुणगणभजनादिरूपसाधनान्तरस्यापि संभवात् "नामैव नस्तारकम्" इत्येवकारासंभवः इत्याशङ्क्याह–**भारत्यापीति** । सुतरां दुःखेनापि निरूपयितुमशक्यः महिमा प्रभावो यस्येति तथा ।

तथा च भारती वाग्विजृम्भणस्याप्यगोचरमहिमत्वे किमस्मदुक्तिस्तत्र फलतीति कैमुतिकन्यायात् न साधनान्तरसंभवः इत्यपिना सूचितम् । वेदैकप्रमाणसंवेद्यत्वं दर्शयति–**त्रय्यन्तरेति** । त्रयी वेदः, तस्य यदन्तरं मध्यभागः, तस्मिन्नित्यर्थः । तथा हि । ऋग्यजुस्सामात्मकस्य वेदत्रयस्य योऽयं मध्यभागः, सप्तकाण्डसमुदायात्मको यजुर्वेदः, तस्य यो मध्यभागः चतुर्थकाण्डः[1], तस्य यो मध्यभागः श्रीरुद्राध्यायः, तस्य यो मध्यभागो नमः सोमाय चेत्यनुवाकः, तस्य यो मध्यभागो "नमः शिवाय च" इति षडक्षरात्मकः शैवमहामन्त्रः, तन्मध्यवर्तीत्यर्थः ।

तथा चोक्तं **शङ्करसंहितायाम्**–

सर्वासामपि विद्यानामुत्कृष्टा श्रुतिरुच्यते ।
चतुर्णामपि वेदानां यजुर्वेदो विशिष्यते ॥
यजुर्वेदे चतुष्काण्डः श्रीरुद्रस्तत्र तत्र च ।
नमः सोमाय चेत्यत्र वरा पञ्चाक्षरी मता ॥
तन्मध्ये जीवरत्नं स्यात् शिव इत्यक्षरद्वयम् ॥ इति ।

यद्यपि त्रय्यन्तरे गोपितमित्यस्मिन् अर्थे नैतच्छङ्करसंहितोपबृंहणमुपपादकं चतुर्वेदान्तर्गतत्वेन पञ्चाक्षरवर्तितया शिव इत्यस्य प्रतिपादितत्वात् ।

---

[1] चतुष्काण्डः (क)

तथापि "सहस्रे शतम्"[1] इति न्यायेन त्रयीगोपितत्वमित्यस्त्येवेत्यदोषः। **वक्तुर्मङ्गलदमिति।** घुणाक्षरन्यायात् अवशोच्चारयितुरपि अत्यन्तशुभावह-मित्यर्थः। अत एव स्मर्तुर्ज्ञातुर्ध्यातुरित्यादिकमुपेक्षितम्। तथा चोक्तं विष्णुभागवते—

यद्द्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसङ्गादघमाशु हन्ति तत्।
पवित्रकीर्तिं त[2]मलङ्घ्यशासनं भवानहो द्वेष्टि शिवं शिवेतरः॥ इति।

**विमलमिति।** आणवकार्मणमायीयाख्यमलत्रयासंस्पर्शित्वेन निर्मलमित्यर्थः। **तारकमिति।** परमगहनसंसारपारावारपरपारप्रापकं शिवेति नामैव। नान्य-देवताप्रतिपादकं नामान्तरमित्यर्थः। ॥ १ ॥

नन्वन्य[3]देवताप्रतिपादकनामान्तरस्याप्यनुसरणे किं बाधकम्? "सेव्यः श्रीपतिरेक एव जगताम्" इत्यभियुक्ताद्युक्तेः। "असति बाधके वस्तुमात्रस्यैवार्थप्रतिपत्तिकरत्वाच्च" इत्याशङ्क्य साधकबाधक[4]प्रमाणाभ्यामर्थ-तोऽपि शम्भुरेव सेव्यो नान्यः इत्याह—

**आनन्त्यौदार्यसत्याद्यति[5]मृतिहृतिभिः स्वल्पसेवातितोषात्**
**सङ्क्ष्टोच्छित्त्युपेक्षाभय[6]हितवचनैरुत्तमत्वाच्च शम्भुः।**
**सेव्यो विष्णूपमन्युद्रुहिणमुनिसुतश्रीदमन्थेच्छुदेवै–**
**र्दक्षश्रीरामवेदैरशिशुपशुवधूराक्षसैः साक्षिभिर्नः ॥ २ ॥**

**आनन्त्येति।** आनन्त्यौदार्यसत्याद्यतिमृ[7]तिवृतिभिः शम्भुरेव सेव्य इत्येतत्साधकहेतूनुपदर्शयति **आनन्त्येत्याद्युत्तमत्वादित्यन्तेन।** नान्यस्मिन्ते तादृग्गुणाः सम्भवन्तीति भावः। उपदर्शितनवसंख्याकहेतुसाधकप्रमाणान्यपि नव दर्शयति विष्ण्वित्यादिना वेदेत्यन्तेन। तथा च विष्ण्वादिसाक्षिका ये

---

1 सहस्रशतम्—(क, ख), 2 कीर्तित (क), 3 नन्वदे (क) 4 साधक (क)
5 दति (ख), 6 मय (क) 7 खगपुस्तकयोनीति (ख)

आनन्त्यादयो गुणाः तेभ्यः शम्भुरेव सेव्य इति यथाक्रममन्वयः। तथाहि। आनन्त्ये विष्णुः साक्षी। पुरा हि परस्परजयलिप्स्वो[1]र्ब्रह्मविष्ण्वोश्चिरकालमूर्ध्वाधः पर्यटतोः अपर्यवसिताद्यन्तभावयोर्नितान्तमन्तःश्रान्तयोर्मध्ये विष्णोः परावर्तनस्य शिवपुराणे विस्तरेण कथनात्।

ब्रह्मणस्तथात्वेऽप्यनृतवचनप्रयुक्तशापप्राप्तया सत्याद्दतौ (अ)साक्षित्वमवगन्तव्यम्। औदार्ये उपमन्युः। यथा महर्षेर्व्याघ्रपादस्य तनयः उपमन्युरिति बालभावापन्नः प्राकृतबुद्ध्या पयःपानार्थमाराधितशम्भुः परमोदारः क्षीरार्णवमेवारात्प्रायच्छदिति। तथा चोक्तं लैङ्गे—

उपमन्युरिति ख्यातो मन्युश्च द्विजसत्तमः।
कुमार इव तेजस्वी क्रीडमानो यदृच्छया॥

कदाचित्क्षीरमल्पं स पीतवान् मातुलाश्रमे।
ईर्ष्यया मातुलसुतोऽपिबत्[2] क्षीरमनुत्तमम्॥

पीत्वा जलं यथाकामं दृष्ट्वा जग्राह मातरम्।
[3]मातर्मातर्महाभागे मम देहि पयस्विनि॥

इत्यादिना क्षीरे याचिते—

दुःखिता विललापालं स्मृत्वा नैर्धन्यमात्मनः।
स्मृत्वा पुनः पुनः क्षीरमुपमन्युरिति द्विजः[4]।
देहि देहीति तामाह रोदमानो महाद्युतिः॥

इत्यादिना पुत्रदुःखमसहमाना—

---

[1] लिप्सोः (ख) प्स्वोः (क) [2] पिबन् (क, ख) [3] ख पुस्तके नास्ति।
[4] द्विजाः (क)

आलिङ्ग्याघ्राय दुःखार्ता[1]प्रददौ कृत्रिमं पयः ।
पीत्वा वै कृत्रिमं क्षीरं मात्रा दत्तं द्विजोत्तमः ॥

नैव क्षीरमिति प्राह मातरं चातिविह्वलः ।
दुःखितं सा[2] तदा प्राह संप्रेक्ष्याघ्राय मूर्धनि ॥

संमृज्य नेत्रे पुत्रस्य कराभ्यां कमलेक्षणा ।
क्षीरं[3] वत्स कुतोऽस्माकं वने निवसतां सदा ॥

अधनानां पुराऽस्माभिर्महादेवो न पूजितः ।
पूर्वजन्मनि यद्दत्तं शिवमुद्दिश्य बाडव[4]
तदेव लभ्यं नान्यत्तु विष्णुमुद्दिश्य वा प्रभुम् ॥

निशाम्य वचनं मातुरुपमन्युर्महामतिः ।
बालोऽपि मातरं प्राह प्रणिपत्य पयस्विनीम् ॥

त्यज शोकं महाभागे महादेवोऽस्ति चेत् क्वचित् ।
चिराद्वा अचिराद्वापि क्षीरोदं साधयाम्यहम् ॥

तां प्रणम्यैवमुक्त्वा च तपः कर्तुं प्रचक्रमे ।
तमाह च तदा माता कुर्वन्तमतिशोभनम् ॥

अनुज्ञातस्तया तत्र तपस्तेपे सुदुष्करम् ।
हिमवत्पर्वतं प्राप्य वायुभक्षः समाहितः ॥

इत्यादिना तपश्चर्यामुक्त्वोक्तं—

रूपं स्वमेव भगवान् आस्थाय परमेश्वरः ।
दर्शयामास विप्राय बालेन्दुकृतशेखरम् ॥

---

[1] खपुस्तके नास्ति [2] दुःखितः सी (क) [3] वीरं (क) [4] वादवा (ग)
बाडवः ब्राह्मणः

क्षीरधारासहस्रं च क्षीरोदार्णवमेव च ।
दध्योदनार्णवं चैव घृतोदार्णवमेव च ॥

फलार्णवं च बालस्य भक्ष्यलेह्यार्णवं तथा ।
अपूप[1]गिरयश्चैव तदातिष्ठन् समन्ततः ॥

उपमन्युमुवाचेदं सस्मितो भगवान् प्रभुः ।
भुङ्क्ष्व भोगान् यथाकामं बान्धवैर्वत्स पश्यताम् ।
उपमन्यो महाभाग तवैषाम्बा हि पार्वती ।
मया पुत्रीकृतोऽस्यद्य दत्तः क्षीरार्णवस्तव ॥ इति ।

सत्याहृतौ द्रुहिणः । स चोक्त एव । मृतिहृतौ मार्कण्डेयः । तच्च मृत्युञ्जयनामवैभवे स्फुटीभविष्यति । स्वल्पसेवातितोषे श्रीदः कुबेरः । तथा हि—कश्चित् काशीस्थो द्विजबालः कलहद्यूतादितत्परः कामं दुर्जनसंगत्या दुराचाररतः खलो मातापितृदूरीकृतोऽनवलम्बनात् खिन्नमनाः

"किं करोमि क्व गच्छामि कथं वा धनमाप्नुयाम्"

इत्येवं पुनः पुनरितस्ततोऽनुधावमानः क्षुधितः कथञ्चिद्दैवयोगात् क्वचित् पुण्यफलप्रभावैकसंवेद्यमनवद्यान्तर्मुखाशेषविद्वज्जनवृन्दविलासोल्लसितमुमाकान्तालयमद्राक्षीत् । ततस्तत्रत्यमशेषाभिलषितमन्नादिकमपहर्तुमन्तर्मन्दिरमाविश्यात्यादरेणैव आत्मीयवसनदशाकृतवर्त्या परमशिवानुपातिनीं प्रदीपच्छायां निराकार्षीत्[2] । ततः प्रसन्नो भगवान् अमर्त्यादैश्वर्याक[3]रदिक्साम्राज्याधिपत्यं दत्तवान् इत्यादि बहुतरं प्रपञ्चितं **काशीखण्डे** ।

संकष्टोच्छित्तावमृतमथनेच्छुर्देवाः । तच्च प्रचण्डोद्दण्डसंवर्तकालदावानलज्वालामालाकुलित[4]कालकूटविषापहरणादिना प्रसिद्धम् ।

---

[1] आपूत (क) [2] निराकारि (क) [3] करः (ग) [4] कुलिनः (क)

तथा चोक्तमभियुक्तैः—

दृष्ट्वा कौस्तुभमप्सरोगणमपि प्रक्रान्तवादा मिथो
गीर्वाणाः कति वा न सन्ति भुवने भारा दिवः केवलम् ।
प्रक्रान्ते गरले द्रुते सुरगणे निश्चेष्टिते विष्टपे
मा भैष्टेति गिराविरास धुरि यो देवस्तमेव स्तुमः[1] ॥ इति ।

मूलकृताप्युक्तं **शिवस्तवे**—

विकुण्ठो वैकुण्ठो गतधृतिरवात्सीच्छतधृतिः
प्रचेता निश्चेता[2] निभृतमघवानास्त मघवा ।
कृतान्तोऽभूत्ता[3]न्तो भसितभवनं विश्वभुवनं
विलोले काकोले शिव शिव भवानेव शरणम् ॥ इति ।

उपेक्षायां सत्यां भयदाने दक्षः । तच्च दक्षाध्वरहरेति नामनिर्वचने व्यक्तीभविष्यति । हितोपदेशे श्रीरामः । तच्चोपदेशतात्पर्यगोचरनिरतिशयानन्दानुभावादिरूपपरमप्रयोजनप्राप्तिफलकं[4] **शिवगीतादौ** प्रतिपदं प्रसिद्धम् ।

उत्तमत्वे वेदाः । कः सर्वोत्तम इति प्रश्ने कृते वेदादिभिश्चतुर्भिः प्रत्येकं सिद्धान्तितस्य शिव एवेत्यर्थस्य **शैवे काशीखण्डादौ** च स्फुटत्वात् । अथैवमानन्त्यौदार्याद्युपदर्शितगुणजातस्य अन्यत्रासम्भवेऽप्यन्यादृशानामेवातुल्य[5]बलप्रभावानामनादिसंसिद्धवात्सल्यादिगुणानामाश्रयत्वेन अन्योऽप्यासेव्यताम् ।

---

1 नीलकण्ठविजयचम्पूः १.४  2 कलं क (क)  3 कपुस्तके नास्ति
5 भूतान्तः क ख ग  5 मेवातुल्य

तथा चोक्तम्—

वात्सल्यादभयप्रदानसमयादार्तार्तिनिर्वापणात्[1]
औदार्यादघशोषणादगणितश्रेयःपदप्रापणात् ।
सेव्यः श्रीपतिरेक एव जगतामेते च षट् साक्षिणः
प्रह्लादश्च विभीषणश्च करिराट् पाञ्चाल्यहल्या ध्रुवः ॥ इति ।

(सप्तर्षिस्तोत्रम्)

तथा च प्रह्लादादिसाक्षिकाः ये वात्सल्यादयो गुणास्तदाश्रयत्वेनान्यस्यापि सेव्यत्वापत्त्या शम्भुरेव सेव्य इत्यवधारणाश्रयणमसङ्गतमेव इत्यत आह **अशिश्वित्यादि** ।

शिशुपशुवधूराक्षसभिन्नैः साक्षिभिरित्यर्थः । तत्र षण्णामपि साक्षिणां साक्षित्वायोग्यशिशुत्वादिधर्माक्रान्ततया प्रत्युत बाधकप्रमाणमात्रोपयोगित्वात् नान्यसेवनं सिध्यतीति भावः । यद्यपि उपमन्योः शिशुत्वेन बाधकप्रमाणोपयोगित्वमेव, तथापि बहुतरसाधकप्रमाणान्तःपरिगणनात् प्रकृतोपयोगित्वमवगन्तव्यम् । ॥ २ ॥

शिवनामभजनातिरिक्तोपायान्तरेषु असारप्रयुक्तमसामर्थ्यमावेदयन् तदेव पुनर्द्रढयति **नाथेति**—

**नाथ त्वच्छक्तितत्त्वाव्ययचरितभगव्यूहमूर्त्यङ्गसाङ्ग-**
**प्रत्यङ्गोपाङ्गकृत्यागमभजनकलांशादिनिष्कर्षमूढाः ।**
**त्वन्नामापि त्यजामो यदि दुरितहरं सान्ववायाः कृतार्थाः**
**केनोपायेन जायेमहि कलिहतके जन्मभाजो वयं हि[2] ॥ ३ ॥**

---

1 नि ता ..................त् (क)
नि ता ......................षापणात् (ग) 2 जन्मनिद्यामतत्र (क)

शक्तयश्च तत्त्वानि च अव्ययानि च चरितानि च भगश्च व्यूहश्च मूर्तयश्च अङ्गानि च साङ्गानि च प्रत्यङ्गानि च कृत्यानि च आगमाश्च भजनानि च कलाश्च अंशादिश्चेति तेषां योऽयं निष्कर्षस्तत्त्वावगमः, तस्मिन् मूढाः सामर्थ्यशून्याः सन्तः कलिहतके जन्मभाजो वयं यदि दुरितहरं त्वन्नामापि त्यजामः, तदा सान्ववायाः कृतार्थाः केनोपायेन जायेमहि ? न केनाप्युपायेनेत्यन्वयः ।

असामर्थ्यद्योतनार्थं कलिहतक इति विशेषणं **काकाक्षिन्यायेन** जन्मनि कृतार्थतायां चेत्युभयत्रान्वेति । कलिहतक[1] इति हतके कलावित्यर्थः । विशेषणस्य परनिपातात् । हतकः हिंसकः, पापकारीति यावत् । तथा च पापकसाधनीभूतेऽस्मिम् कलियुगे जन्मशालिनो वयं कथं त्वन्नामभजनमपि विना कृतकृत्या भवेमेत्यर्थः[2] ।

तत्र शक्तयो यथा—इच्छाज्ञानक्रियादिरूपाः । तदुक्तं **शैवागमे**—

इच्छाज्ञानक्रियारूपास्त्रिशूलं शक्तयो मताः । इति ।

तत्त्वानि यथा—शिवः, शक्तिः, सदाशिवः, ईश्वरः शुद्धविद्या चेति[3] पञ्च शुद्धानि । प्रकृतिर्बुद्धिरहङ्कारो मनश्चेति ४, ज्ञानेन्द्रियाणि ५, कर्मेन्द्रियाणि ५, तन्मात्राणि ५, भूतानि ५, इति चतुर्विंशतितत्त्वान्यशुद्धानि । माया कालो नियतिः कला अविद्या रागः पुरुषश्चेति सप्त शुद्धाशुद्धानि[4] । इति षट्त्रिंशत्तत्त्वानि । अव्ययानि ।

तदुक्तं **विष्णुपुराणे**—

ज्ञानं विरागितैश्वर्यं[5] तपः सत्यं क्षमा धृतिः ।
स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च ।
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे ॥ इति ।

---

1 इत्यहतक (क) 2 भवेमेतीत्यर्थः (क) 3 ईश्वरश्चेति (क) 4 शुद्धानि (क)
5 विगतमैश्वय (ग), विरातैश्वर्यं (क)

चरितानि परमशिवचरितानि दारुवने भिक्षाटनप्रभृतीन्यनन्तानि तत्तच्छैवागमेषु प्रसिद्धानि ।

भगो यथा–

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ इति ।

व्यूहो यथा—

शिवो भवो हरश्चैव मृडश्चैव तथा परः ॥ इति ।

मूर्तयो यथा—

सोमधार्युमासमेतवृषभारूढनृत्तरूपवैवाह्यभिक्षाटनकामारिकालकाल-त्रिपुरारिजलन्धरवधगजारिवीरभद्रहर्यर्धार्धनारीकिरातकङ्कालचण्डेशानुग्रह-विषापहारिचक्रदानस्वरूपविघ्नप्रसादोमास्कन्धैकपादसुखासनदक्षिणामूर्ति-लिङ्गभागाख्याः पञ्चविंशतिः ।

अङ्गानि यथा—

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥

इत्युक्तानि ।

अथवा अङ्गानि साङ्गप्रत्यङ्गोपाङ्गानि वातुलशुद्धे प्रतिपादितानि । तत्राङ्गानि यथा—

शिरो वक्त्रं च हृदयमङ्गमित्यभिधीयते । इति ।

साङ्गानि यथा—

मूर्तीनां गुणरूपं तु साङ्गमित्यभिधीयते ।
त्रिगुणाः शक्तिप्रतापावभेद्योऽनुग्रहस्तथा ॥

ऋद्धिर्माया वैभवं च नादः संहृतिरेव[1] च ।
एते दशगुणाः प्रोक्ताः महेशविभवावहाः ॥ इति ।

प्रत्यङ्गानि यथा—

वक्षः कण्ठः स्तनौ बाहू नाभिगुह्योदरं तथा ।
नेत्रनासास्यकर्णं च पाणिपादतलाङ्गुलि ॥
ऊरू जानू च जङ्घे च प्रत्यङ्गमिति कीर्तितम् ॥ इति ॥

उपाङ्गानि यथा —

वस्त्रोपवीतमालाश्च गन्धमाभरणं तथा ।
आसनावरणे चैवमुपाङ्गमिति कीर्तितम् ॥ इति ।

कृत्यानि यथा—

सृष्टि-स्थिति-संहारतिरोधानानुग्रहौ वन्धमोक्षौ । आगमाः शैवागमाः । भजनानि परमशिवनमनादीनि । कलाः —

निवृत्तिश्च प्रतिष्ठाश्च विद्या शान्तिरनन्तरम ।
शान्त्यतीतेति पञ्चैताः कलाः स्युः परमेशितुः ॥ इति ।

अंशाश्च शरभभैरववीरभद्राद्यवतारविशेषाः । 'ममैवांशो जीवलोके' इत्याद्युक्तेर्जीवा एव वा । आदिपदात् परमशिवस्य निर्विशेषस्वरूपस्य मुक्त्यैकताप्यस्य परिग्रह इति । ॥ ३ ॥

इत्येवं वर्णद्वयात्मकस्य शिव इति विशिष्टनाम्नो वैभवातिशयमुक्त्वा प्रत्येकं पुनस्तावेव वर्णौ संस्तौति शिवेति —

---

[1] सङ्गतिरेव (क)

**शिवेति द्वौ वर्णौ परपदपतद्धंसगरुतौ**
**तटौ संसाराब्धेः स्वविषयकबोधांकुरदले ।**
**श्रुतेरन्तर्गोपायिततररहस्यप्रवचरौ**
**घरट्टग्रावाणौ भवविटपिबीजौघदलने ॥ ४ ॥**

परपदं परं धाम, परमोत्कृष्टा गतिरिति यावत् । तत्र पतन्तः आपतन्तः व्याप्रियमाणाः ये हंसाः परमहंसाः, तेषां गरुतौ पक्षाविव स्थितौ । तथा च चिदंशभूतानां जीवानां पुनस्तदैक्यावाप्तिहेतुत्वेन[1] परमशिवप्रतिपादकस्य[2] शिवनाम्नः प्रतिपादनात् नित्यनिरतिशयानन्दावाप्तिरूपकैवल्याख्यापवर्गप्रदायक[2]त्वमुक्तं भवति ।

तच्च भवजलधिनिमग्नानां प्राणिनां कथं भवेदित्याशङ्कामपाकर्तुमाह-**तटाविति** । संसाररूपो योऽयमब्धिः अर्णवः, तस्य तटौ मर्यादाभूतौ । संसारार्णवतारकावित्यर्थः । तटं त्रिष्वित्यमरः ।

नन्वत्र कथं संसारार्णवतारकत्वं शिवनाम्नः संभवति ?

"तमेवैकं जानथ आत्मानम्
अन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः ।" इति ।

"यद् ज्ञात्वा मृत्युमत्येति"

"नान्यः पन्था अयनाय विद्यते"

"तं वै ज्ञात्वा मृत्युमत्येति जन्तुः नान्यः पन्था दुःखविमुक्तिहेतुः"

इत्यादिबहुतरप्रमाणबलात् परमशिवतत्त्वावगमस्यैव तथात्वोपदेशनादित्याशङ्क्याह—**स्वविषयकेति** ।

---

1 हेतुत्वे (क) 2 अयं भागः ख-गयोर्नास्ति

स्वविषयकबोधः स्वरूपावगमः । **श्रुतेरित्यादि** । श्रुतेर्वेदराशेर्यदन्तः मध्यभागः, तत्र गोपायिततरं यद्रहस्यं[1] तद्रूपौ चरौ स्पशौ । वेदान्तसंवेद्याखिलाशयास्पदाद्वैतब्रह्मप्रतिपादकौ इत्यर्थः । भवविटपिनः संसारमहीरुहस्य यानि बीजानि अनादिवासनात्मकाः प्राणिदोषास्तेषां समूहस्य[2] दलने चूर्णीकरणे घरट्टग्रावाणौ तण्डुलादीनां पिष्टीकरणोपयुक्तपाषाणविशेषाविव स्थितौ इत्यर्थः । ॥ ४ ॥

अत्र च—

मनोवाक्कायकर्मभ्यः कृतं कर्म शुभाशुभम् ।
भुञ्जाना एव मुच्यन्ते नान्यथा कल्पकोटिभिः ।
कायिकं वाचिकं हार्दमुत्तमं तूत्तरोत्तरम् ।
कायेन मनसा वाचा कर्मणा यच्च दुष्कृतम् ॥

इत्यादिप्रमाणमात्र[3]परिशीलन[3]पर्यवसितधीमतां केषाञ्चिदर्थान्तराशङ्कापनोदनव्याजेन पुनस्तमेव स्तौति—**स्वामिन्निति** ।

**स्वामिन् कर्मणि कायिके न जरसा शक्तोऽस्मि नो मानसे**
**चाञ्चल्यान्मनसो न निर्धनतया पूर्तेष्टदानादिके ।**
**तस्माद् वाचिकमेव कर्म विदुषां साध्यं विदित्वा भवन्-**
**नाम्नामष्टशतं निरुच्य जनुषः साफल्यमीहेतमाम्[4] ॥ ५ ॥**

स्वामिन्निति सम्बुद्धिः । हे स्वामिन् प्रभो । करचरणाद्यखिलावयवानामपाटवेन जरया कायिके कर्मणि नाहं शक्तोऽस्मि । नापि मानसे ध्यानादौ । संशयाकारवृत्तिमत्स्वरूपत्वेन मनसो निसर्गतः चाञ्चल्यात् ।

---

1 तस्याहृतिराहरणं तस्मिन् विषये इति अत्र गपुस्तके अधिकम् ।
2 समूहस्तस्य (ग) 3 गपुस्तके नास्ति 4 तराम् (क)

न वा पूर्तेष्टदानादिके । तेषां धनैकसाध्यत्वेन तदभावात् । तथा च कायिकमानसिकयोरुभयोरेकैकस्याप्याश्रयणे उक्तबाधाद् वाचनिकमेव[1] कर्म प्रकृतोपयुक्तम्—इत्यार्यवर्यै राद्दतमिति अष्टोत्तरशतशिवनामनिर्वचनेनैव जन्मसाफल्यमित्यर्थः । ॥ ५ ॥

अथ तेषां नाम्नां समूलकत्वध्वननपुरस्सरं स्वग्रन्थं[2] नामतो निर्दिशति शिवनामेति—

शिवनामकल्पवल्ल्याः
शिवचरितानन्दकाननभवायाः ।
रुचिरं रत्नावालं
रचये सत्पद्यरत्नवरैः ॥ ६ ॥

**शिवरहस्ये** हि 'शरीरार्धमहम्'[2] इत्यादिना द्वाविंशतिश्लोकान् पठित्वा 'शिवो महेश्वरः' इत्यादिभिः त्रयोदशभिः श्लोकैः अष्टोत्तरशतं नामान्युक्त्वा 'इमानि दिव्यनामानि' इत्यादयोऽष्टौ श्लोकाः पठिताः । **शङ्करसंहितायां** तु एष्वेव प्रथमभागस्य आद्यान्त्य[3]श्लोकावेव पठित्वा नामोत्तरभागे 'एवमष्टोत्तरशतम्' इत्यादिना नवश्लोका अन्य एव पठिताः इति स्थितिः ।

तत्र—

नामकल्पलतेयं मे सर्वाभीष्टप्रदायिनी । इति **शिवरहस्ये** त्रयोदशश्लोक्या अन्वर्थकनामनिर्देशो दृष्ट[5] इत्याशयेन वल्ल्या इत्युक्तिः । शिवचरितं रहस्यसंहितादिरूपमेव आनन्दकाननं काशीव[6] आमोदप्रदं वनम् । शिवचरितमानन्दकं येषां शैवाः, विष्ण्वादयः[6], तेषामाननानि वा ।

---

[1] वाचिकमेव (ग) [2] स्वग्रन्थनाम (पि,ग) [3] कथम् (ग) [4] आद्यन्त्य (ग)
[5] इष्ट (क) [6] काशीरा (ख), काशी (ग) [7] न वैष्णवादयः (ग)

आवालमावापः[1] । सिच्यमानजलधारणयोग्या वेदिका । स्यादालवाल-मावालः इत्यमरः । सत्पद्यान्येव सप्तदशाधिकशतसंख्यानि रत्नवराणि तैरित्यर्थः । कटपयवर्गाक्षराणामेकादिसंख्यापरतया प्रसिद्धत्वेन सत्पद्यस्य उक्तसंख्यापरत्वात् । अत्र च 'नाम्नामष्टशतं निरुच्य जनुषः साफल्यमीहे-तमाम्' इत्यत्र निखिलनिगमागमप्रमाणैकतात्पर्यकत्वेन निष्कृष्टार्थप्रतिपादकत्व-लक्षणस्य निर्वचनस्य प्रागर्थसिद्धिं विना अनुपपत्तेः प्रकृतस्तवप्रतिपाद्याष्टोत्तर-शतसंख्याकान्यपि नामान्यनादिसिद्धानि तत्तच्छैवागमेषु शिवरहस्यादिषु स्पष्टं प्रतिपादितानि इत्याविष्कृत[2]मित्यतः तदप्यत्र व्याख्यायते । तदुक्तं **शिवरहस्ये**। पार्वत्युवाच—

शरीरार्धमहं[3] शम्भोर्येन प्राप्स्यामि केशव ।
तदिदानीं समाचक्ष्व स्तोत्रं शीघ्रफलप्रदम् ॥ इति ।

अत्र च **शिवरहस्ये** सप्तमेंऽशे त्रयोदशाध्याये हिमवत्पर्वतस्थे मानस-सरसि[4] मानसेश्वराहिकण्ठेश्वरसिद्धेशलिङ्गगौरीशलिङ्गात्मकनामचतुष्टयशालि-शिवलिङ्गस्य माहात्म्यप्रकरणे कण्व-कश्यपसंवादः ।

तदा कण्वः समागत्य स्नात्वाऽब्धेर्मानसे जले ।
मानसेशं समभ्यर्च्य कश्यपं प्राह सादरम् ॥ इति ।

कण्व उवाच—

संसारदाव[5]खिन्नानां मर्त्यानामकृतात्मनाम् ।
घोरसंसारविच्छेदः कथं भवति सत्वरम् ॥

---

1 तत्र भवाया: शिवनामामृतकल्पलतायाः रुचिरं सुन्दरं रत्नावालम् । इति गपुस्तके रेखोपरि अधिकं लिखितं दृश्यते ।

2 गपुस्तके नास्ति 3 कथं (ग) 4 सरणि (क) 5 कपुस्तके लुप्तम्

इत्यादिप्रश्ने कश्यप उवाच—

शिवाभिधं महः सेव्यं सर्ववेदान्तसंश्रुतम् ।

इत्यादिना शिवभक्तिनामभस्मरुद्राक्षादिमहिमानमुक्त्वोक्तम्—

अत्र पूर्वं शिवा नित्याप्याविर्भूता हिमालये ।
चक्रे प्राप्तशिवाप्यत्र शिवं प्राप्तुं तपो मुदे ॥

प्राप्तः शिवो यया, परमशिवैक्यं प्राप्तापीत्यर्थः । अत एव नित्यापि मुदे आपामरसाधारणलोकानामानन्दावाप्तये । तथापि[1] परमशिवैक्यं प्राप्तापि अनादिभूता चिच्छक्तिरखिललोकानन्दावाप्तये पुनः शिवं प्राप्तुमिव तपश्चक्रे इत्यन्वयः । इत्येवं गौरीतपोविशेषादिमहिमानमुक्त्वा[2] —

ध्येया त्वमेव सर्वेषां भुक्तिमुक्तिप्रदायिनी ।
त्वयापि ध्यायते देवि ध्यातव्यं तव किं शिवे ॥

इत्यादिविष्णुकृतप्रश्नस्य प्रत्युत्तरध्वनिरूपो देवीप्रश्नोऽयं पार्वत्युवाचेति । यादृशेन स्तोत्रेण शम्भोः शरीरार्धमहं प्राप्स्यामि तादृशं स्तोत्रं समाचक्ष्वेत्यन्वयः । केशवेति साभिप्रायकसंबुद्ध्या त्वया हि येन ध्यातेन[3] हर्यर्धेश्वरात्मकत्वेन प्रसिद्धं शरीरार्धं लब्धं तदेव ध्यायते मयेति ध्वनितम् । तदुक्तं वातुलशुद्धे पञ्चविंशतिमूर्तिप्रकरणे —

त्रयोदशं हरेरर्धमर्धनारी चतुर्दशम् । इति । विष्णुरुवाच—

शरीरार्धं महेशस्य प्राप्तमेव त्वया शिवे ।
तथापि पृच्छसे देवि ततो वात्सल्यभावतः ॥ इति ।

वात्सल्यभावतः वात्सल्याशयतः पृच्छसे पृच्छसीत्यर्थः ।

---

1 खगयोगर्नास्ति 2 उक्त्वोक्तं (ग) 3 ध्यानेन (ग)

त्वया ततोऽहं वक्ष्यामि स्तोत्रमेकं शिवप्रदम् । इति ।
त्वयेति, तुभ्यमित्यर्थः । स्तोत्रं स्तव्यनिष्ठगुणाभिधानरूपस्तुतिप्रतिपादक-शब्दसन्दर्भरूपमित्यर्थः । एकं मुख्यं, तत्र हेतुः शिवप्रदमिति । मङ्गल-प्रदत्वात् परमशिवाभिन्नकैवल्यप्रदत्वाद्वा मुख्यमित्यर्थः । विष्णुरुवाच—

पुत्रोऽहं तव कल्याणि ततो वात्सल्यभावतः ।
मया सह त्वया देवि शिवे संभाषणं कृतम् ॥

वात्सल्यभावः सत्ता । शिवे इति[1] विषयसप्तमी । संभाषणं प्रश्न-रूपम् । तथा च त्वत्संभूतेन मया सह 'शरीरार्धमहं शम्भोर्येन प्राप्स्यामि केशव' इत्यादिना यत् शिवविषयकप्रश्नरूपं संभाषणं कृतं तद्वात्सल्यभावत एव कृपातिशयविशेषप्रयुक्तमेव, न तु मदीयसामर्थ्यप्रयुक्तमित्यर्थः ।

दक्षहस्तांगुष्ठनखान्महाराज्ञः समुत्थितः ।
महामत्स्याकृतिः श्रीमान् आदिनारायणो विभुः ॥

इत्यादिना देवीपुत्रत्वेनापि विष्णोः प्रतिपादनादिति स्वयं पुत्रभावं प्राप्तः सन् परमपुरुषो विष्णुः परां शक्तिं संस्तोतुमुपक्रमते[2]—

तव यत्पादपद्मं तत् सर्ववेदान्तसंस्तुतम्[3] ।
दृष्टं मया कृतार्थोऽस्मि त्वत्पादाम्बुजवीक्षणात् ॥

यं पश्यसि जगद्वन्द्ये कृपया तमनेकधा ।
पूजयन्ति सुराः सिद्धा मुनयश्च न संशयः ॥

लक्ष्म्याद्याः सुभगा जातास्त्वत्पादाम्बुरुहार्चनात् ।
त्वत्पादपद्मं सततं ध्यायते कमलादिभिः ॥

---

1 शिवविषये सप्तमी इति (ग) 2 संक्रमते (ख, ग) 3 संस्तुते (क)

त्वमादिशक्तिः परमा सर्ववेदान्तसंस्तुता ।
त्वमेवोङ्काररूपा त्वं सर्ववेदान्तरूपिणी ॥

त्वमाद्यन्तविहीना त्वं सच्चिदानन्दरूपिणी[1] ।
विज्ञानसागरा साक्षात् ज्ञानधारा[2] विमोहिनी ॥

कलाकाष्ठामुहूर्तादिकालोन्नयनकारिणी ।
त्वत्त एव समुत्पन्ना वयं ब्रह्मादयः सुराः ॥

त्वत्त एव समुत्पन्नाः लोकाः सर्वेऽपि शाम्भवि ।

समुत्पन्नाः आविर्भूताः । लोकाः[3] चतुर्दशभुवनानि ।

तव नेत्रत्रयं चन्द्रः सूर्योऽग्निश्च महेश्वरि ।

सोमसूर्याग्निलोचनेत्यर्थः ।

तवैव मूर्तयः सर्वे पवनाद्याः शिवप्रिये ।
त्वदन्यद्दृश्यते नात्र त्वमेव सकलं शिवे ॥

निष्कलापि त्वमेवाम्ब[4] सकलासि त्वमीश्वरि ।

सकलनिष्कलभावं विवृणोति —

त्वमेव सकला देवि सृष्टिस्थित्यन्तकारिणी ।
त्वमेव निष्कला देवि सर्वोपाधिविवर्जिता ॥

प्राप्या त्वमेव सर्वेषां मुक्तिरूपा स्वभावतः ।
त्वामीदृशीं विदित्वैव सच्चिदानन्दलक्षणाम् ।
भजन्ति मुनयः सर्वे नित्यं वेदैः स्तुवन्ति च ॥

ईदृशी त्वं निराकारा साकारेवाद्य दृश्यसे ।
यतस्त्वमसि विज्ञानमतो रूपं न ते ध्रुवम् ॥

---

[1] लुप्तम् (ग) [2] ज्ञानाधारा [3] लुप्तम् (ग) [4] त्वमेवासि (ग)

त्वं तपोदानयागानां फलदासि शिवप्रिये ।
त्वामुद्दिश्यैव मुनिभिः सततं तप्यते[1] तपः ॥
संतुष्टा तपसा देवि ददासि परमं पदम् ।
सुप्रीतायास्तवोमेऽत्र नादेयं वस्तु दृश्यते ॥

उमे इति संबुद्धिः । सुप्रीतायास्तवादेयं वस्तु न दृश्यते । सर्वं त्वया प्राप्तमेवेत्यर्थः ।

शिवे त्वयैव सृष्टानि वैकुण्ठादिपदान्यपि ।
तानि दत्तानि चास्मभ्यं त्वयैवाचिंतया ध्रुवम् ॥
यतः शिवस्त्वमेवासि ततो दत्तं शिवेन यत् ।
तत्त्वयैव[2] ध्रुवं दत्तं सर्वकल्याणसंश्रये ॥

इत्येवं परां शक्तिं प्रस्तुत्य परमशिव[3]प्रतिपादकनामोत्कर्षं दर्शयति –

रत्नराशौ मनोज्ञानि रत्नानीव मया पुरा ।
वेदराशौ गृहीतानि शिवनामानि शोभने ॥
सन्त्यनन्तानि[4] नामानि महादेवस्य शोभने ।
तानि सर्वाणि नामानि पावनानि न संशयः ॥
तानि दिव्यानि नामानि प्रसिद्धानि वरानने ।
बहून्यपि ततस्तेषामावृत्तिरतिदुर्लभा ॥
अस्ति गुह्यतमं[5] देवि नाम्नामष्टोत्तरं शतम् ।
शम्भोरहं प्रवक्ष्यामि पठतां शीघ्रकामदम् ॥

अस्तीति वर्तमानव्यपदेशादिमानि नामानि न मयेदानीं कल्पितानि, अपि तु प्रागेव प्रसिद्धानि, अष्टोत्तरसहस्र[6]नामभ्यः सारभूतानि शिवेनैवोद्धृतानि अधुनापि वर्तन्ते इत्यनादिसिद्धत्वमाविष्कृतमिति ।

---

1 तन्यते (क) 2 तत्त्वयैव (ख,ग) 3 परमेश्वर (ग) 4 सत्यानन्तानि (क)
5 गुह्यतरं (क) 6 शत (ग)

अस्य सर्वकामप्रदत्वमुत्तररामायणे रावणदिग्विजययात्रायां नर्मदातीरे शिवपूजाप्रकरणेऽप्युक्तम् । यथा—

ततस्ते[1] राक्षसाः स्नात्वा नर्मदायां वराम्भसि ।
उत्तीर्य पुष्पाण्याजह्रुः बल्यर्थं रावणस्य तु ॥
नर्मदापुलिने ह्यद्य शुभ्राभ्रसलिलप्रभे ।
राक्षसेन्द्रैर्मुहूर्तेन कृतः पुष्पमयो गिरिः ॥
पुष्पेषूपहृतेष्वेव रावणो राक्षसेश्वरः ।
अवतीर्णो नदीं स्नातुं गङ्गामिव महागजः ।
तत्र स्नात्वा च विधिवत् जप्त्वा जप्यमनुत्तमम् ॥

इत्यादिना स्नानजपादिकमुक्त्वोक्तम्—

यत्र यत्र स याति स्म रावणो राक्षसाधिपः ।
जाम्बूनदमयं लिङ्गं तत्र तत्र स्म नीयते ॥
स तत्र काञ्चनमयं लिङ्गं संस्थाप्य सैकते ।
अर्चयामास पुष्पैश्च गन्धैरामोदगन्धिभिः ॥
लिङ्गं त्वपूजयद्रक्षो रावणो लोकरावणः ।
जप्योपहारैः सततं गन्धैः पुष्पैश्च नित्यशः ॥
बलिधूपप्रदानैश्च रावणो लिङ्गमार्चयत् ।
सवादित्रनिनादैश्च शर्वं[2]माराधयत् प्रभुम् ॥
घृतक्षीराभिषेकैश्च दध्ना चाप्युदकेन च ।
पट्टैः कौशेयसंमिश्रैः नामाष्टशतसंस्तवैः ।
शुशुभे तत्र तल्लिङ्गं नानारत्नविभूषितम् ॥
अर्चयित्वा तु तं देवं यदा[3] चरति रावणः ।
तत्सर्वं सिध्यते तस्य विधिनार्चयतो हरम् ॥ इति । ॥ ६ ॥

---

[1] कपुस्तके लुप्तम् [2] सर्वं (ग) [3] सदा (ग)

ओम् । अस्य श्रीपरमशिवाष्टोत्तरशतनामकल्पलतास्तोत्रमहामन्त्रस्य । नारायण ऋषिः । अनुष्टुप् छन्दः । श्रीसदाशिवो देवता । श्रीसाम्बशिव-प्रीत्यर्थे जपे विनियोगः ।

अथ ध्यानम् —

धवलवपुषमिन्दोर्मण्डले संनिविष्टं
भुजगवलयहारं भस्मदिग्धाङ्गमीशम् ।
हरिणपरशुपाणिं चारुचन्द्रार्धमौलिं
हृदयकमलमध्ये सन्ततं चिन्तयामि ॥

हरिणपरशुपदं वराभययोरप्युपलक्षणम् ।
जपमाले तु मन्त्रस्य ध्येयो देवश्चतुर्भुजः ।
वराभयपरश्वेणलसत्करसरोरुहः ॥

इति **कामिकोक्तेः** ।

शिवो महेश्वरः शम्भुः पिनाकी शशिशेखरः ।
वामदेवो विरूपाक्षः कपर्दी नीललोहितः ॥

एषु नवसु नामसु प्रथमं निर्वक्ति —

(ओम् शिवाय नमः)

प्रकृत्या नैर्मल्यादमलगुणयोगादपि शमा-
ज्जगत्याधारत्वाद् भजदमृतदानाच्च भवतः ।
बलादिच्छाशक्तेः प्रथितपुरि भद्रश्रव इति
प्रतीतस्त्वं लिङ्गे त्रिपुरहर ! तस्मादसि शिवः ॥ ७ ॥

प्रकृत्येति[1]। प्रकृत्या शिवः, स्वभावतः शोभनरूप इति यावत्। शोभनत्वं च आनन्दघनत्वम्। नैर्मल्यात् अनादिजीववर्त्याणवकार्मण-मार्यीयाख्यमलत्रयाभावत्वं[2] चाकर्मवश्ये सर्वज्ञे परमात्मनि स्वभावत एव सम्भवतीति बहुतरं तत्तच्छैवागमेषु प्रपञ्चितम्।

तथा चोक्तं **वायुसंहितायाम्**।

अनादिमलसंश्लेषप्रागभावात् स्वभावतः।
अत्यन्तपरिशुद्धात्मेत्यतोऽयं शिव उच्यते ॥ इति।

अथवा शिवशब्दः कल्याणगुणवचनः। "स्वश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्" इत्यमरः। शिवाः शोभनाः गुणाः अस्य सन्तीति शिवः। अर्श आदेराकृतिगणत्वान्मत्वर्थीयोऽच्प्रत्ययः। शोभनगुणाश्रय इत्यर्थः। तदप्युक्तम् —

अथवाशेषकल्याणगुणैकायन ईश्वरः।
शिव इत्युच्यते सद्भिः शिवतत्त्वार्थवेदिभिः ॥ इति।

यद्यप्यत्र निष्कलत्वात् गुणाः कथमपि न संभवन्ति।

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्।
अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम्।

इत्यादिश्रुतेः।

---

1 गपुस्तके नास्ति 2 मायेयाख्यमलत्रयाभावलक्षणं शुद्धत्वम्। अणुर्जीवस्तस्या-नादिजीवतापादकः अविद्यासंबन्धः आणवमलम्। अनादिकर्मफलं वासनारूपं कार्मणं अस्ति प्रकाशते इति व्यवहारयोग्यसमग्र्यां सत्यामपि नास्ति न प्रकाशत इति व्यवहारयोग्यस्वरूपमावरणं मायेयं मलमिति तादृशमलत्रयाभाववत्त्वं च— इति गपुस्तके।

" शिवतत्त्वं महासेन निष्कलं त्विति कीर्तितम् । "

इति वातुलशुद्धवचनाच्च । तथापि—

स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् ।
[1]यःस्त्र्यन्नपानादिविचित्रभोगैः स एव जाग्रत् परितृप्तिमेति ॥

सृष्ट्यर्थं सर्वतत्त्वानां लोकस्योत्पत्तिकारणात् ।
योगिनामुपकाराय स्वेच्छया गृह्णते तनुम् ॥ इति ।

तथैव योगिनां चापि ज्ञानिनां मन्त्रिणां तथा ।
जपपूजानिमित्ताय निष्कलं सकलं भवेत् ॥

इत्यादिश्रुतिवातुलशुद्धवचनसिद्धान् पराशक्तिपरिकल्पितगुणानादाय तथा व्यपदेश इत्यवगन्तव्यम् ।

अथवा शाम्यतीति शिवः । शान्तः इत्यर्थः ।

उमासहायं परमेश्वरं [2](शिवं) प्रभुं
त्रिलोचनं नीलकण्ठं प्रशान्तम् ।

इति श्रुतेः इति । शिवादयश्चेति हैमव्याकरणसूत्रेण कनि इत्वमलोपयोश्च रूपमिति सुभूतिचन्द्रः ।

अथवा शेते असम्बाधेन वर्ततेऽस्मिन् सर्वमपि इति शिवः । सर्वाधारक इत्यर्थः ।

" सर्वनिघृष्वरिष्वलिष्वशिवपद्वप्रह्वेष्वा अस्वतन्त्रे[3] " इत्यौणादिकान्निपातनात् तन्त्रपदोक्ते कर्तृभिन्नेऽधिकरणेऽर्थे[4]रूपम् । सर्वकारणीभूतचिच्छक्तेरप्याधारतया परमशिवस्यैव[5] जगदाधारत्वात् ।

---

1 यस्त्वन्न (ग) स्त्र्यन्न (ख) 2 शिवमिति नास्ति (क) 3 अतन्त्रे (ख,ग)
4 ऽर्थे इति नास्ति (ख) 5 'व'कारः नास्ति (ख)

तथा च श्रुतिः—

"मायां तु प्रकृतिं[1] विद्यान्मायिनं तु महेश्वरम्"

"यो योनिं योनिमधितिष्ठत्येको
यस्मिन्निदं संचविचेति विश्वम् ।
तमीशानं वरदं देवमीड्यं
निचाय्येमां[2] शान्तिमत्यन्तमेति ॥"

"आधारमानन्दमखण्डबोधं
यस्मिन् लयं याति पुरत्रयं च ॥" इत्यादिरिति ।

अथवा वष्टि लोकहितमिति शिवः । लोकानां भजतां हितं परमामृतरूपं वष्टि इच्छति, ददातीति[3] यावत् । वश कान्ताविति धातोः पचाद्यच् । पृषोदरादित्वात्साधुत्वं, वर्णस्य व्यत्यये अकारस्य इकारादेशे च शिव इतिरूपसिद्धिः । कान्तिरिच्छा[4] ।

[4]हिंसिधातोः सिंहशब्दो वश कान्तौ शिवः स्मृतः ।
वर्णव्यत्ययतः सिद्धः पश्यकः कश्यपो यथा ॥ इत्यभियुक्तोक्तेः ।

तथा चोक्तं महाभारते—

समेधयति यन्नित्यं[6] सर्वार्थानामुपक्रमम् ।
शिवमिच्छन् मनुष्याणां[7] तस्माद्देवः शिवः स्मृतः ॥ इति ।

अथवा वष्टीच्छाश्रय इत्यर्थः । रूपसिद्धिः पूर्ववदेव । सा चेच्छा चिद्रूपायाः पराशक्तेर्भेद एव ।

"परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ॥ इति श्रुतेः ।

---

[1] विद्धि (ग) [2] निचाय्य मां (क) विश्वाय्ये मां (ख) [3] ददाति यावत् (ग)
[4] कान्तिरिणा (ख) [5] हिंस (ग) [6] यं नित्यं (ख, ग) [7] तस्मादेव (ख, ग)

वातुलशुद्धेऽपि —

शिवस्य तु पराशक्तिः सहस्रांशसमुद्भवा ।
पराशक्तेः सहस्रांशादादिशक्तिसमुद्भवः ॥
आदिशक्तिसहस्रांशादिच्छाशक्तिसमुद्भवः ।
[1]इच्छाशक्तिसहस्रांशाज्ज्ञानशक्तिसमुद्भवः ॥
*ज्ञानशक्तिसहस्रांशात्क्रियाशक्तिसमुद्भवः[1] । इति ।

तथा च—

[2]शक्तिराज्ञा पराशैवी चिद्रूपा परमेश्वरी ।
शिवेव तिष्ठत्यखिलं यया[3] कारणभूतया[4] ॥ इति ।

शिवपुराणेऽपि —

तस्याङ्कमध्यमारूढा शक्तिरिच्छाह्वया[5] परा ।
महालक्ष्मीरिति ख्याता श्यामा सर्वमनोरमा ॥ इति ।

जगत्याधारत्वात् । जगत्याः प्रपञ्चस्य आधारः आश्रयः, तस्य भावः, तस्मात् । भजदमृतेति । भजनमुपासनम् । भवतः इत्यत्र विषयत्वं षष्ठ्यर्थः । तस्य च[6] भजनेऽन्वयः । तथा च[7] भवद्विषयकोपासकानाममृत-दानाच्चेत्यर्थः । बलादिच्छाशक्तेः । इत्यत्र बलशब्दः आश्रयत्वपरः । इच्छाशक्त्याश्रयत्वादित्यर्थः[8] ।

भद्रश्रवः इति । भद्रकर्णह्रद इति प्रथिता प्रसिद्धा या पूः पुरं, क्षेत्रविशेष इति यावत् । तत्रत्यलिङ्गे शिवेश्वरत्वेन प्रतीतः अवगत इत्यर्थः ।

---

1-1 इदं नास्ति (ग) *-1 नास्ति (ख) 2 शिवराज्ञा (ख) शक्तिराद्या (ग)
3 यथा (ग) 4 भूतये (ग) 5 ह्वया (ख) 6 तस्य (ग) 7 भवद्विषयोपासकोपा (ग)
8 इच्छाशक्ते शक्त्याश्रयत्वा (ग) इच्छाशक्त्या शक्त्याश्रयत्वादित्यर्थः (ख)

अष्टषष्टि[1]क्षेत्रगणनावसरे "भद्रकर्णह्रदे शिवम्" इति काशीखण्डात् पाद्माच्च। त्रिपुरहरेति सम्बुद्धिः। तस्मादसि शिव इति। तस्मात्त्व-मुपदर्शितनैर्मल्यादिहेतुसमूहात् शिवोऽसि। शिवपदप्रतिपाद्यो भवसि इत्यर्थः।

इदं च श्रुतिसिद्धं नाम। "नमः शिवाय च शिवतराय च", "तस्मात्सर्वगतः शिवः", "न सन्न चासंछिव एव[2] केवलः" इत्यादिश्रुतेः। शिखरिणीसंज्ञकं[3]वृत्तमिदम्। तथा च पैङ्गलं सूत्रं—शिखरिणी य्मौ न्सौ भ्लौग्ऋतुरुद्राः इति। प्रतिपादं यगणः मगणः नगणः सगणः भगणः लघुः गुरुश्च, षड्भिरेकादशभिश्च पादे यतिः[4] इत्ये[5]तद्वृत्तं शिखरिणीसंज्ञकं[6] भवतीत्यर्थः। ॥ ७ ॥

अथ क्रमप्राप्तानि द्वितीयादीनि नामानि निर्वक्ति—तवेत्यादिभि-रष्टभिः।[7]

(ओम् महेश्वराय नमः)

**तवेश्वरत्वं त्रिजगद्विलक्षणं**
**त्वमीश्वराणां महतामपीश्वरः।**
**जगत्तिरोधानकरः श्रुतीरितः**
**त्वं पञ्चविंशोऽपि परो महेश्वरः ॥ ८ ॥**

ईश ऐश्वर्य इति धातोः कर्तरि 'स्थेशभासे'[8]त्यादिना वरच्प्रत्यये ईश्वर इति रूपम्।

महांश्चासावीश्वरश्चेति कर्मधारयः। ईशितृत्वे महत्त्वं चात्र[9] प्रवर्त-नीयेष्वखिललोकप्रवर्तकत्वलक्षणं जगद्वैलक्षण्यम्। अङ्गेषु जघन्यस्य गुह्यस्य

---

1 षष्टि (ख) 2 ऋटितम् (क)। शिव एव (ग) 3 ख-गयोर्नास्ति
4 पादयतिः (क,ग) 5 तकारः लुप्तः (ख) 6 संज्ञं (ग)
7 ख-गयोर्न दृश्यते 8 स्थेशभासपिसकसो वरच् 3-2-175
9 च नम्र (क,ख) चात्र प्रव (ग)

पूजने केनापि प्रवर्तयितुमशक्येऽपि अत्यादरेणाखिललोकप्रवर्तनात् ।

तथा चोक्तं **महाभारते** —

सत्येन ब्रह्मचर्येण लिङ्गमस्य यथास्थितम् ।
समर्चयन्ति लोकाश्च महेश्वर इति स्मृतः ॥ इति ।

अयमर्थः । यथास्थितं लिङ्गरूपेणैवाविर्भूतं, न तु विष्ण्वाद्यवतार-विशेषादिवद्रूपान्तरेण[1] तिरोहितम् । एवंभूतमपि लिङ्गं लोकाः समर्चयन्ति । तच्च न यथाकथंचिदेव ज्ञेयं[2], किन्तु सत्यब्रह्मचर्याद्यखिलनियमोपेतया महत्या[3] भक्त्या सम्पूजयन्ति यतः, अतो महेश्वरः इति ।

एतद्दृष्ट्यैवा[4]नुशासनिकेऽप्यभिहितम् —

यस्य ब्रह्मा च विष्णुश्च त्वं च शक्र सहामरैः ।
अर्चयध्वं सदा लिङ्गं तस्मात्[5] श्रेष्ठतरो हि कः ॥ इति ।

अथवा ईशितृत्वे महत्वमुत्कृष्टत्वं, स्वर्गादिरूप[6]यत्किञ्चिदीशितृत्व-मिन्द्रादीनामप्यस्ति । अत एव छन्दोगानां षड्विंशब्राह्मणे उत्पातशान्ति-प्रकरणे इन्द्रे[7] यमादिषु च 'ईश्वराय स्वाहा' इति मन्त्रप्रवृत्तिर्दृष्टा[8] । तद्व्यावृत्त्यर्थं महेति । इन्द्रादीनामपीश्वरत्वात्[9] शिवो महेश्वर इत्यर्थः । तथा च श्रुतिः ।

"ध्येयः सर्वेश्वरः शम्भुराकाशमध्ये" इति ।
"सेन्द्रादिषु च देवेषु तस्य चैश्वर्यमुच्यते" इति भारतवचनाच्च ।

---

1 रूपेण (ग) 2 चिदवज्ञया (ख,ग) 3 सत्वया (ग) 4 दृष्टव (ख,ग)
5 तस्माच्छ्रेष्ठ (ग) 6 स्वर्गादिरूपं (ग) 7 इन्द्रयमादिषु (ग)
8 प्रतिपत्तिर्दृष्टा (ग) प्रवृत्तिर्दृष्ट्वा तध्यावृत्यस्त्वर्थं (ख) 9 मपीश्वरात् (ख)

एतदभिप्रायेणैव —

महेश्वरश्च[1] भूतानां महतामीश्वरश्च सः । इति भारतवचनम् । महतः प्राणिनः इन्द्रादीन् प्रत्यपि यदस्येशितृत्वमिदमेवैतदीयेशितृत्वस्य महत्त्वमिति । न तु महतामीश्वरो महेश्वर इति षष्ठीतत्पुरुषरूपव्युत्पत्त्यन्तर-प्रदर्शनपरम् । तथा सति व्यधिकरणत्वादुत्तरपदस्य "आन् महतः समानाधिकरणजातीययोः" इत्यात्वस्यैवाप्रसक्त्या महदीश्वर इत्येव[2] स्यात् । एतेन 'त्वमीश्वराणां महतामपीश्वरः' इति मूलं[3] व्याख्यातम् ।

यद्वा ईश्वरत्वे महत्वविशेषणमखिलजगदुपसंहारकारिणो रुद्रादपि[4] विशेषं ख्यापयितुम् ।

व्याप्त्यर्थकादश्नोतेरन्तर्भावितण्यर्थात्[5] कर्मणि वरट् चेत्यौणादिके वरटि[6] चकाराद् उपधाया ईत्वे च निष्पन्नस्य ईश्वरपदस्य संहारक[7]सामान्य-परतया रुद्रेऽपि प्रवृत्तेः । व्याप्तिश्च व्यापकस्यात्मनो अवच्छेदकशरीरनाशे सिध्यन्ती मरणरूपैव । 'गुरोर्व्याप्तिदिनं चैव' इत्यादिना तन्त्रराजे तथा प्रयोगदर्शनात् । तेन त्रिमूर्तिसंहारिका चतुर्थी मूर्तिर्महेश्वर इत्यर्थः ।

सृष्टिस्थितिसंहारतिरोधानानुग्रहरूप[8]पञ्चकृत्येषु त्रिमूर्तितिरोधानं बन्धो[9] वा चतुर्थमूर्तेः कृत्यम् । निवृत्त्यादिकलाभिमुख्येन ब्रह्मादीनां पञ्चानामपि यथातथं[10] सृष्ट्यादिपञ्चकृत्यकर्तृत्वस्यानेकशैवागमादिषु[11] प्रतिपादितत्वात् ।

---

1 महेश्वरश्च सः इति (ख,ग) 2 त्येव (ख) 3 मूले (ग)
4 विशेषव्याख्यापयितुम् ग 5 भावितार्थादाशुकर्मणि वरटि (ग)
,, वरट् चेत्याद्यौणादिके (ख)
6 संहारक (ख,ग) 7 रूपं च पञ्चकृत्येषु (ग,ख) 8 वन्धो (ग), वन्धौ (ख)
9 यथायथं (ख,ग) 10 शैवागमेषु (ग)

उक्तं च **शिवपुराणे** —

शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः ।
संसारवैद्यः सर्वज्ञः परमात्मेति मुख्यतः ॥

नामाष्टकमिदं तस्य प्रतिपादकमीशितुः । आद्यं तु पञ्चकं तत्र [1]शान्त्यातीताद्यनुक्रमात् । संज्ञा सदाशिवादीनाम्—इति[2] ।

महेश्वरस्य स्वरूपमपि तन्त्रेषूक्तम् —

नानारूपधरो देवो नानाभेदसमन्वितः ।
नानाचि[3]ह्नसमोपेतो नानालीलाधरो हरः[4] ॥

तथा—

जटामुकुटसंयुक्तमेकवक्त्रं त्रिनेत्रकम् ।
वरदाभयहस्तं च मृगीपरशुधारकम् ।
इदं[5] रूपं महेशस्य रूपभेदमथो शृणु ॥ इति ।

तथा **वातुलशुद्धे**ऽपि—

महेश्वरसहस्रांशाद्रुद्रदेवसमुद्भवः[6] ।
महेश्वरस्य कोट्यंशाद् ब्रह्मविष्णुसमुद्भवः ॥ इति ।

तथा **पाद्मे** शिवराघवसंवादेऽपि —

य एव शाश्वतो देवो ब्रह्मवन्द्यः सदाशिवः ।
त्रिलोचनो गुणाधारो गुणातीतोऽक्षरोऽव्ययः ॥

---

1 शान्त्यतीताद्यनुग्रहात् (ग) 2 'इति' गपुस्तके नास्ति 3 कपुस्तके त्रुटितम्
4 हरिः (ग) 5 इन्द्र (ग) 6 समन्वितः (ग)

जाता सिसृक्षा तस्याथ[1] वीक्ष्यात्मस्थं[2] गुणत्रयम् ।
दक्षिणादसृजत्पुत्रं ब्रह्माणं वामतो हरिम्[3] ॥
ब्रह्मदेशान्महेशानं त्रीन् पुत्रान् असृजत्प्रभुः ॥ इति ।

एवमन्यत्रापि —

परः शिवः शिवाच्छक्तिः शक्तेर्नादसमुद्भवः ।
नादाद्बिन्दूदयस्तस्मात्सदाशिवसमुद्भवः ॥
सदाशिवान्महेशश्च[4] ततो रुद्रसमुद्भवः ।
रुद्राद् विष्णुस्ततो ब्रह्मा ततः सर्वमिदं जगत् ॥ इति ।

एतत्सर्वं मनसिकृत्यैवोक्तं **जगत्तिरोधानकर**[5] इति । सम्बन्धात्मकचतुर्थकार्यकर इत्यर्थः ।

**श्रुतीरित** इति ।

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'
'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥'

'तमीश्वराणां परमं महेश्वरम्' इत्यादिश्रुतिप्रतिपाद्यमित्यर्थः । एवंभूतो महेश्वरः पञ्चविंशो[6]ऽपि चन्द्रशेखरादिभेदभिन्नपञ्चविंशतिमूर्त्यात्मकोऽपि परः शिवाख्यः[7] चतुर्थः शिव एव त्वं, तत्प्रभेदरूपत्वादिति भावः । पञ्चविंशतेर्महेश्वराणां प्रत्येकं संख्यापू[8]रकत्वाविशेषाड्डु[9]प्रत्ययो नानुपपन्नः । अत एव **आपस्तम्बकल्पे** पदं त्रेधं विभज्य तृतीयं उत्तरोत्तरतो[10] गार्हपत्यस्य शीत-

---

1 यस्याथ (ग) 2 वीक्ष्यात्मास्थं (ख) 3 हरिः (ख) 4 महेशस्य (ख)
5 बन्धात्मकचतुर्थकार्यकरः (ख,ग) 6 गपुस्तके नास्ति 7 कपुस्तके त्रुटितम्
8 परः शिवाख्यः (क) 9 कपुस्तके त्रुटितम् । संख्यापूरकत्वाविशेषाड्डुप्रयोगो ना (ख) 10 प्रायो नानुपपन्नः (ग)

भस्मन्युपवपति[1] तृतीयमाहवनीये तृतीयं पत्न्यै प्रयच्छतीति त्रयाणामपि तृतीयपदेनैव व्यवहारः । एतेन पञ्चदशान्याज्यानि इत्यादि व्याख्यातम् ।

शिवमद्वैतं चतुर्थं मन्यन्ते इति श्रुतिसिद्धो हि तुरीयः शिवः पुराणेषु[2] परशिव[3] इति व्यवह्रियते । आगमेषु तु स त्रिविधः, परमः सदाशिवो महेश्वर इति ।

तत्र सदाशिवः पञ्चविधः । कर्तृकर्मसादाख्यौ द्वौ, मूर्तामूर्त-सादाख्यौ च द्वौ, शिवसादाख्यश्चैक इति । महेश्वरस्तु पञ्चविंशतिविधः इति[4] तत्तत्स्वरूपनिरूपणपूर्वकमेतत्सर्वं वातुलशुद्धे तत्त्वभेदपटले प्रपञ्चितम् ।

संग्रहेऽपि —

शिवमेकं विजानीयात् सादाख्यं पञ्चधा भवेत् ।
महेशस्तु महासेन पञ्चविंशतिभेदकः ॥
एतद्वै तत्त्वसंयुक्तमेकत्रिंशदिति स्मृतम् ।[4]

इति तत्स्वरूपनिरूपणम् । अथवा सांख्यमतरीत्या त्वं पञ्चविंशतत्त्वं, परोऽपि षड्विंशतत्त्वमपि । उभयथापि श्रुतीरितः इत्यर्थः । तथा च मायां त्विति श्रुतेरुपबृंहणं[5] **वायुसंहितायाम्** —

अथवा त्रिगुणं तत्त्वं मायेयमिदमव्ययम् ।
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥
मायाविक्षोभकोऽनन्तो महेश्वरसमन्वयात् ॥ इति ।

[6]पुरुषविशेष ईश्वर इति महति पुरुषे ईश्वरपदस्य **योगसूत्र**[7]प्रयोगश्च ।

---

1 शेरते भस्मन्युपपत्ति (ख) 2 शिवपुराणेषु (ख,ग) 3 परः शिवः (ख)
4 अयं भागः नास्ति (क) 5 बृंहणमपि (ग) 6 पुरुष ईश्वरः (क)
7 योगसूत्रे प्रयोगाश्च (ख,ग)

यो वेदादाविति श्रुतेरुपबृंहणमपि तस्यामेव —

त्रयोविंशति[1]तत्त्वेभ्यः परा प्रकृतिरुच्यते ।
प्रकृतेस्तु परं प्राहुः पुरुषं पञ्चविंशकम् ॥
यं वेदादौ स्वरं प्राहुर्वाच्यवाचकभावतः ।
वेदैकवेद्यं[2] याथात्म्याद् वेदान्ते च प्रतिष्ठितम् ॥
स एव प्रकृतौ लीनो भोक्ताऽयं प्रकृतेर्यतः ।
तस्य प्रकृतिलीनस्य[3] परो यः स महेश्वरः ॥ इति ।

प्रकृतेः पुरुषाणां च प्रवर्तकः षड्विंश इति भावः । इति सर्वं शिवम् ।

वंशस्थाख्यं वृत्तमिदम् । तथा च पैङ्गलसूत्रं — वंशस्थं ज्तौ ज्रौ । प्रतिपादं जगणः तगणः जगणो रगणश्च इत्येतद्वृत्तं वंशस्थाख्यं भवतीत्यर्थः ।
॥ ८ ॥

## (ओम् शम्भवे नमः)

**शं भावयसि च भवसे शं च भवसि चेति वा देव ।**
**त्वं देवदारुविपिने लिङ्गे प्रथितोऽस्यतः शम्भुः ॥ ९ ॥**

शं सुखं भावयत्युत्पादयतीति शम्भुः । शिवङ्कर इत्यर्थः । "सर्वमन्यत्परित्यज्य शिव एको ध्येयः शिवङ्करः"[4] इति श्रुतेः ।

यद्वा भवतिरयं प्राप्त्यर्थकः । भू प्राप्तावात्मनेपदी[5] । तथा च शं भवते सुखं प्राप्नोति इति शम्भुः । आनन्दवान् इत्यर्थः । "आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति ।" "सुषुप्तिकाले

---

1 तत्त्वे परा (ग) 2 यच्च स्याद् (ग) 3 यः परः स (ग)
4 अयं भागः न दृश्य (ख,ग) 5 पदीति (ग)

सकले विलीने तमोऽभिभूतः सुखरूपमेति" "आनन्दं ब्रह्मणो रूपं तच्च देहे[1] व्यवस्थितम्" इत्यादिश्रुतेः । अत्र च गुणगुणिनोरभेदादानन्दविशिष्टार्थप्रतिपादनेऽपि आसां श्रुतीनां प्रामाण्य[2]मवगन्तव्यम् । अथवा शं सन् सुखरूपः सन् भवति सत्ताश्रयः इति शम्भुः । भू सत्तायामिति धातोः सुखसत्तास्वरूप इत्यर्थः । 'सत्यं ज्ञानमनन्तं ब्रह्म' 'नित्यविज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतेः । देवदारुविपिने दारुकावने । **लिङ्ग** इति । दारुकावनान्तर्विराजमानं यल्लिङ्गं तत्र शम्भ्वीश्वरः इति प्रसिद्धो भवसीत्यर्थः ।

'देवदारुवने शम्भुम्' इति पुराणात् । अतः उपदर्शितार्थप्रतिपादकत्वात्[3] क्षेत्रविशेषे प्रसिद्धत्वाच्च शम्भुपदप्रतिपाद्यो भवसीत्यर्थः । इदं च श्रुतिसिद्धं[4] नाम । 'नमः शम्भवे च मयोभवे च' 'सर्वेश्वरः शम्भुराकाशमध्ये' इति श्रुतेः । उपगीत्याख्यं[5] वृत्तमिदम् । तथा च पैङ्गलं सूत्रम् अन्त्येनोपगीतिः । आर्याद्वितीयार्धलक्षणकमर्धद्वयं यत्र सोपगीतिरित्यर्थः । ॥ ९ ॥

## (ओम् पिनाकिने नमः)

**नाकोऽपि येन पिहितो मुनिकण्वमूर्ध-**
**वल्मीकवेणुजधनुस्त्रितयाग्रजन्मा ।**
**यः सप्तशीर्षफणिरूप उदारकर्मा**
**चापस्तमावहसि नाथ ततः पिनाकी ॥ १० ॥**

त्रिपुरदहनावसरप्रयुक्तशरानलज्वालया पिहितः आच्छादितः नाकः स्वर्गो येनेति पिनाकम् । तदस्यास्तीति पिनाकी । पृषोदरादित्वात्साधुः ।

---

[1] देह (क) [2] प्रमाण (क) [3] उपदर्शितप्रदिपादकत्वात् (ग)
[4] श्रुतिप्रसिद्धम् (ख,ग) [5] उपगीताख्यं (ग)

प्रशंसायां मत्वर्थीय इनिः[1] । प्रशंसा च "नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः" "अवतत्य धनुस्त्वगँसहस्राक्ष शतेषुधे" (सह)[2] "या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः" इत्यादिश्रुतिप्रसिद्धा ।

नाकोऽपि येन पिहित इत्यत्र यच्छब्दार्थं[3]माह "मुनिकण्वेत्यादिना, यः सप्तशीर्ष" इत्यादिना वाक्यद्वयेन । कण्वाख्य[4]महामुनेर्योऽयं मूर्धा उत्तमाङ्गं, तत्र संजातो यो वल्मीकः, तत्सम्भूतवेणुप्रकृतिकं यत् धनुस्त्रितयं, पिनाकशार्ङ्गगाण्डीवाख्यं चापत्रयं, तत्र अग्रजन्मा प्रथमोत्पन्नः इत्यर्थः । तथा चोक्तमुमामहेश्वरसंवादे —

युगान्तरे महादेवि कण्वो नाम महामुनिः ।
स हि दिव्यां तपश्चर्यां कर्तुमेवोपचक्रमे ॥ इत्यादिना ।

पिनाकं नाम मे चापं शार्ङ्गं नाम हरेर्धनुः ।
तृतीयमवशेषेण गाण्डीवमभवद्धनुः ॥
स च सोमाय निर्दिश्य ब्रह्मलोकं गतः पुनः । इति ।

**सप्तशीर्षफणिरूप** इति । सप्त शीर्षाणि शिरांसि यस्येति तथा । तदुक्तं **महाभारते** उपमन्यूपाख्याने—

इन्द्रायुधसहस्राभं धनुस्तस्य महात्मनः ।
पिनाकमिति विख्यातं स च वै पन्नगो[5] महान् ।
सप्तशीर्षो महाकायः तीक्ष्णदंष्ट्रो विषोल्बणः ।
ज्यावेष्टितमहाग्रीवः स्थितः पुरुषविग्रहः ॥
शरश्च सूर्यसंकाशो दृष्टः पाशुपताह्वयः ।
येन च त्रिपुरं दग्धं सर्वदेवमयः शरः ॥ इति ।

---

1 इति (ग) 2 इदं अधिकम् (ग) 3 यच्छब्दर्थः महामुनि (क)
4 कण्वाख्यस्य (ख) । कण्वस्य (ग) 5 यन्नगो (क)

अत एवोदारकर्मा । तदुक्तं लैङ्गे—

सोमश्च भगवान् विष्णुः कालाग्निर्वायुरेव च ।
शरे व्यवस्थिताः सर्वे देवमूचुः प्रणम्य तम् ॥

दग्धमप्यथ देवेश वीक्षणेन पुरत्रयम् ।
अस्मद्धितार्थं[1] देवेश शरं मोक्तुमिहार्हसि ॥

अथ संसृज्य धनुषा ज्यां हसन् त्रिपुरार्दनः ।
मुमोच बाणं विप्रेन्द्र विकृष्याकर्णमीश्वरः ॥

तत्क्षणात्तत्पुनर्दग्धं त्रिपुरं तच्छरार्चिषा । इति ।
स्पष्टमन्यत् ।

इदं च श्रुतिप्रसिद्धं नाम । "प्राणेश्वरः कृत्तिवासाः पिनाकी" इति । वसन्ततिलकाख्यं वृत्तमिदम् । तथा च पैङ्गलसूत्रं—वसन्ततिलका त्भौ जौ गौ । प्रतिपादं तगणः भगणः जगणद्वयं गुरुद्वयं चेत्येतद्वृत्तं वसन्ततिलकाख्यं भवतीत्यर्थः । ॥ १० ॥

## (ओम् शशिशेखराय नमः)

**मतिमयोऽखिलजीवसमष्टिर-**
**प्यमथि दक्षमखे हिमगुर्वृथा[2] ।**
**इति धिया दयया विधृतस्त्वया**
**शिरसि तेन भवान् शशिशेखरः ॥ ११ ॥**

शशी चन्द्रः स एव शेखरः शिरोभूषणं यस्येति तथा । अयं च चन्द्रः न परिदृश्यमानः[3] प्राकृतः, किन्तु मतिमयः ज्ञानस्वरूप इत्यर्थः ।

---

[1] अस्पर्धितर्थं (ख,ग) [2] हिमगु था (क) [3] नास्ति (ख)

तथा चोक्तं **शिवपुराणे** —

'ज्ञानचन्द्रकलाचूडं दशदिग्बाहुमण्डलम्' इति । तथा **वाराहपुराणेऽपि** —

जटास्वरूपेण समस्तसागराः
कुलाचलाः सिन्धुवहाश्च सर्वतः ।
शशी परिज्ञानमिदं तव स्थितं
न देव पश्यन्ति कुदृष्टयो जनाः ॥ इति ।

तथा अखिलजीवसमष्टिः । सर्वेषां प्राणिनामैकात्म्यापन्नः । तथात्वं[1] च सोमस्य वाराहपुराणे प्रजापालनसत्यतपस्संवादे प्रपञ्चितम् ।

तस्मिंस्तु मथिते जातः पुनः सोमो महीपते ।
योऽसौ क्षेत्रज्ञसंज्ञो वै[2] देहेऽस्मिन् पुरुषः परः ।
स एव सोमो मन्तव्यो देहिनां जीवसंज्ञितः ॥ इति ।

**हिमगुरिति** । हिमशब्दः शीतलवचनः । "तुषारः शीतलः शीतो हिमः" इत्यमरः । गोशब्दः किरणपरः । हिमाः शीतलाः गावः किरणा यस्येति हिमगुः । शीतकिरण इत्यर्थः । एवंभूतश्चन्द्रः अनपराधोऽपि संभ्रमवशात् क्रुद्धेन वीरभद्रावतारे इतरैरपराधिभिः सह दक्षाध्वरेऽमथि मथितः । शिक्षित इति यावत् । ततः[3] स्वानपराधितावेदने शशिना कृते दयार्द्रचित्तेन शिवेन[3] तद्दोषोपशमाय शिरसा पुनर्धृत इत्यर्थः ।

तथा चोक्तमानुशासनिके **उमामहेश्वरसंवादे** —

सोमस्तत्र मया देवि कुपितेन भयार्दितः ।
पश्यंश्चानपराधी सन् पादाङ्गुष्ठेन ताडितः ॥

---

[1] तथाविधत्वं (ग) [2] यो सो क्षेत्रसंज्ञो वै (क) [3] स्वानपराधितावेदनेन शशिना कृतदयार्द्रचित्तन शिवेन (ख,ग)

तथा विनिकृतेनाहं सामपूर्वं प्रसादितः ।
तन्मे चिन्तयतश्चासीत्पश्चात्तापः पुरा प्रिये ॥
तदाप्रभृति सोमं हि शिरसा धारयाम्यहम् ।
एवं वै पापहानिस्तु भवेदिति मतिर्मम ॥ इति ।

इदं चानपराधिपीडनमत्यन्तपापावहमिति लोकशिक्षणम् । द्रुतविलम्बिताख्यं वृत्तमिदम् । तथा च पैङ्गलसूत्रं — द्रुतविलम्बितं न्भौ श्रौ । प्रतिपादं नगणः भगणद्वयं रगणश्च इत्येतद्वृत्तं द्रुतविलम्बिताख्यं भवतीत्यर्थः । ॥ ११ ॥

(ओम् । वामदेवाय नमः )

वामार्धेन क्रीडसि त्वं त्रिलोकी-
वक्राचारो वल्गुमोदोऽसि तस्मात् ।
विश्वीत्तीर्णः स्रष्टृतामप्यतीतः
प्रेयानात्मा कथ्यसे वामदेवः ॥ १२ ॥

अत्र वामेन वामार्धेन, वामार्धाभिमानिन्या पराशक्त्येति यावत् । दीव्यतीति देवः । क्रीडाशाली । दिवु क्रीडादाविति धातोः सृष्टिस्थित्युपसंहारादिरूपविविधप्रपञ्च[1]कार्यकर्तेत्यर्थः । तथा च 'स्वतन्त्रः कर्ता' इत्याद्यागमप्रमाणसिद्ध[2]जगत्कर्तृत्वव्यपदेशस्य परमशिववृत्तेः [3]तदनपायिपराशक्तिसंवलनप्रयुक्तत्वेन स्वयं न किञ्चिदपि कार्यं करोतीति भावः ।

न तस्य कार्यं करणं च विद्यते
न तत्समश्चाप्यधिकश्च विद्यते ।
परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ॥ इति श्रुतेः ,

---

1 प्रवेच (ख) 2 सिद्धि (ख), सिद्धे (ग) 3 तवनमायि (ग)

लिप्यते न स पापेन[1] पद्मपत्रमिवाम्भसा । इति स्मृतेः[2],

"शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम्" इत्याद्यभियुक्तोक्तेश्च इति शक्तेः सकलकार्यनिर्वाहकत्वस्य[3] परमशिवापृथग्भावस्य[4] तदौदासीन्यस्य च दर्शितत्वात् । तेन स्रष्टृतामप्यतीत इत्ययमर्थः सूचितः । अथवा वामो वक्रः, लोकविरुद्धकपालक्ष्वेलपैशाचदैगम्बरादिविलक्षणाचारवान्[5] । स चासौ देव इति कर्मधारयः ।

दीव्यतिरस्मिन् पक्षे[6] व्यवहारार्थकः । लोके हीष्टलिप्सया अनिष्टपरिजिहीर्षया वा मङ्गलादिकं निषेव्यते । परमशिवस्य च इष्टानिष्टात्मककार्यकारणसंघातरूप[7]प्रपञ्चासंसर्गिकत्वेनाचिन्त्यापरिमितमहिमाधारत्वात् स्वच्छन्दचारीत्यर्थः । तेन विश्वोत्तीर्णः इत्येतत्प्रदर्शितम् । अथवा वामः सुन्दरः । "मङ्गलायतनं देवं युवानमतिसुन्दरम् ।" इत्याद्यागमोक्तेः । स चासौ देवः, मुदित इति यावत् । दीव्यतेर्मोदार्थकत्वात् । तथा चाकृत्रिमातिशयितपरमप्रेमास्पदमित्यर्थः[8] ।

"न वा अरे सर्वस्य कामाय सर्वं प्रियं
भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति" ॥ इति श्रुतेः ।

तेन[9] प्रेयानात्मेत्ययमर्थः सूचित इत्याशयेनाह–**वामार्धेनेत्यादि** ।

**त्रिलोकीवक्राचारः** । त्रयाणां लोकानां समाहारस्त्रिलोकी । तद्वक्रः तद्विरुद्धः आचारः आचरणं यस्येति तथा । **वल्गुमोदः** । वल्गुः सुन्दरः मोदः आनन्दो यस्येत्यर्थः । **तस्मादिति** । उपदर्शितत्रितयहेतोरित्यर्थः । एतस्य च विश्वोत्तीर्ण इत्यादिष्वन्वयः । तथा च वामार्धेन

---

1 पापेभ्यः (ग) 2 श्रुतेः (ग) 3 निर्वाहकस्य (ग) 4 शिवपृथग्भावस्य (ख,ग)
5 विलक्षणाचरणवान् (ख) 6 नास्ति (क) 7 प्रपञ्चसंसर्गित्वेन (ख,ग)
8 प्रेमास्पद इत्यर्थः (क,ग) 9 प्रयोजनात्मेत्यर्थः (क)

क्रीडानात् स्रष्टृतामप्यतीतः । त्रिलोकीवक्राचरणात् विश्वोत्तीर्णः । मनोहरानन्दवत्वात् प्रेयानात्मेति व्युत्क्रमेण यथायोग्यमन्वयः । यद्यपि वामश्चासौ देव इति समासे सौन्दर्यस्य देवपदप्रतिपाद्ये[1] आनन्दवत्येवान्वयः । वल्गुमोदोऽसि तस्मादिति तन्निर्वचने च विशेषणीभूतानन्द एवान्वय इति परस्परविरोधः । व्याख्यानव्याख्येययोरेकार्थकत्वस्य व्युत्पत्तिबललभ्यत्वात् ।

तथापि 'विशिष्टे अन्वितस्यासति[2] बाधके विशेषणेऽप्यन्वयः' इति न्यायात् सौन्दर्यस्य मोदविशेषणत्वेनाप्यन्वयसम्भवादविरोध इति ।

इदं च श्रुतिप्रसिद्धं नाम । "वामदेवाय नमो ज्येष्ठाय नम" इति । शालिनीसंज्ञकं वृत्तमिदम् । "शालिनी म्तौ गौ समुद्रऋषयः ।" प्रतिपादं मगणः तगणद्वयं गुरुद्वयं च, चतुर्भिः सप्तभिश्च यतिरित्येतद् वृत्तं शालिन्याख्यं भवतीत्यर्थः । ॥ १२ ॥

## (ओम् विरूपाक्षाय नमः)

**विषमाणि विविधशक्तीन्यक्षीणि विलक्षणानि वाक्षाणि ।**
**हर ! हेमकूटशैले लिङ्गे व्यक्तोऽस्यतो विरूपाक्षः ॥ १३ ॥**

विरूपाणि विषमाणि अक्षीणि लोचनानि यस्य स विरूपाक्षः । सोमसूर्याग्निलोचन इत्यर्थः । अथवा विरूपाणि इच्छाज्ञानक्रियात्मकत्वेन विविधशक्तीनि अक्षीणि यस्येति पूर्ववत् । इच्छाज्ञानक्रियात्मकलोचनत्रयवान् इत्यर्थः ।

तथा चोक्तं शैवागमे —

इच्छाज्ञानक्रियारूपविलसल्लोचनत्रयम् । इति ।

अथ वा विरूपाणि विलक्षणानि अक्षाणि इन्द्रियाणि यस्य स तथा ।

---

[1] देवप्रतिपाद्ये (क) [2] अन्वितस्याः सति (ग)

इन्द्रियपदं त्वगादिधातूनामप्युपलक्षणम् । लोके ह्याहङ्कारिकाणि भौतिकानि वा इन्द्रियाणि । भौतिकाश्च त्वगाद्या धातवः प्रसिद्धाः । नैतादृशास्त्वगाद्या धातवश्चक्षुरादीनि वेन्द्रियाणि परमशिवस्य संभवन्ति ।

"निष्क्रियं निष्कलं शान्तं निरवद्यं निरञ्जनम् ।
अपाणिपादमश्रोत्रम्" इत्यादि श्रुतेः ।

किन्तु उपासकैश्वर्यानार्थं परिकल्पितान्यप्राकृतानीन्द्रियाणि । तथैव त्वगाद्या धातव इत्यर्थः ।

तदुक्तं **शिवपुराणे** —

अप्राकृतशरीरं तमतिमन्मथरूपिणम् ।
धृतरीतिघनीभूतसच्चिदानन्दविग्रहम् ॥ इति ।

तथा अन्यत्र **शैवागमे**ऽपि —

नास्य देहेऽस्थिरुधिरं[1] न मांसं वापि किञ्चन ।
प्रतिबिम्बमिवाकाशे शक्रचापमिवाम्बरे ॥
ज्योतिर्मयतया सिद्धमिदं सादाशिवं वपुः । इति ।

**कामिके**ऽपि –

चतुर्विंशत्युत्तरं यद् भुवनानां शतद्वयम्[2] ।
भुवनाध्वा स संचिन्त्यो रोमवृन्दात्मना विभोः ॥
पञ्चाशद्रुद्ररूपेण स्तुवन् वर्णाध्वकल्पना ।
असौ त्वगात्मना चिन्त्यो देवदेवस्य शूलिनः ॥
सप्तकोटिमहामन्त्रैर्मूलविद्यासमुद्भवैः ।
मन्त्राध्वा रुधिरात्मासौ विचिन्त्यः पार्वतीपतेः[3] ॥

---

[1] देहेऽन्ति रुधिरम् (ख) [2] शतत्रयम् (ग) [3] पार्वतीपतिः (ग)

अनेकभेदसंभिन्ना मन्त्राणां पदसंहतिः ।
पदाध्वासौ पशुपतेः शिरामांसतया स्थितः ॥
पृथिव्यादीनि षट्त्रिंशत् तत्त्वान्यागमवेदिभिः ।
उक्तान्यमीभिस्तत्त्वाध्वा शुक्लमज्जास्थिरूपधृक् ॥ इति ।

एवं परमशिवस्य[1] पञ्चाननैरुद्गतानि यानि कामिकाद्यष्टविंशत्यागमात्मकानि तदात्मकत्वेनापि ध्यातव्यं रूपमुक्तं तथैव प्रदेशान्तरे ।

यथा—

कामिकं पादकमलं योगजं गुल्फयोर्युगम् ।
चिन्त्यं पादाङ्गुलीरूपं कारणं प्रसृतिद्वयम् ॥
अजितो जानुनोर्युग्मं दीप्तमूरुद्वयं विभोः ।
गुह्यं वीजात्मकं सूक्ष्मसहस्रे तु कटिद्वयम् ॥
पृष्ठभागोंऽशुमानस्य नाभिः श्रीसुप्रभेदकम् ।
विजयं जठरं प्राहुः निश्वासं हृदयात्मकम् ॥
स्वायंभुवं स्तनद्वन्द्वमनलं लोचनत्रयम् ।
वीरागमः कण्ठदेशो[2] रुरुतन्त्रं श्रुतिद्वयम् ॥
मुकुटं मुकुटं तन्त्रं बाहवो विमलागमाः ।
चन्द्रज्ञानमुरः शम्भोर्बिम्बं वदनपङ्कजम् ॥
जिह्वा प्रोद्गीतमीशस्य ललितं गण्डयोर्युगम् ।
सिद्धं ललाटफलकं सन्तानं कुण्डलद्वयम् ॥
यज्ञोपवीतं सर्पोक्तं हरस्रक् पारमेश्वरम् ।
किरणं रत्नभूषास्य वातुलं वसनात्मकम् ॥
एवं तन्त्रात्मकं रूपमीश्वरस्य विचिन्तयेत् ॥ इति ।

---

[1] परमस्य (ख) [2] करदेशो (क), नीरीगमः कण्ठदेशो (ख)

हर हेमकूटशैल इति । हरेति सम्बुद्धिः । हेमकूटेति क्षेत्रविशेषः । 'हेमकूटे विरूपाक्षम्' इति पाद्मे । तत इति । उपदर्शितहेतोः विरूपाक्ष इति प्रसिद्धो भवसीत्यर्थः । इदं च श्रुतिप्रसिद्धं नाम ।

"ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ।"

गीत्याख्यं वृत्तमिदम् । तथा च पैङ्गलं सूत्रम् । आद्यर्धं समा गीतिः । आर्यापूर्वार्धलक्षणकमर्धद्वयं यत्र तद्गीत्याख्यं वृत्तं भवतीत्यर्थः । ॥ १३ ॥

पुर्व पूर्ताविति धातोः सम्पदादित्वात् भावे[1] क्विपि राल्लोपः (६-३-२१) इति वलोपे पर् शब्दो रेफान्तः पूर्तिवाची । अन्तर्भावितण्यर्थात् तत एव धातोः कर्तरि वा क्विपि पूरपर्यायः पर्शब्दः । कशब्दो जलवाची । "मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः" इत्यमरः । तस्य पर् कपर् जलप्रवाहः । स च गाङ्गो विवक्षितः । तेन दायति शुध्यतीत्यर्थे दैप्शोधने इति धातोः सुपि स्थः (३-२-४) इत्यत्र सुपीति योगविभागात् सुप्युपपदे आतो धातोः कप्रत्ययो भवतीति कर्तरि कप्रत्यये कपर्द इति रूपसिद्धिरित्यभिप्रायेणाह—

(ओम् कपर्दिने नमः)

**नदीपूरैः शोधादथ सुरधुनीशोधनात्तत्प्रदानात्**
**कचग्रन्थेर्भेदोऽतिशयितगुणः स्यात्कपर्दो वराटः ।**
**तदाधारः पूरस्थगनमपि तत्पावनं तत्प्रकाश-**
**क्षमत्वं मैरालीं प्रथयसि तनुं छागलाण्डे कपर्दी ॥ १४ ॥**

**नदीपूरैः शोधादिति** शोधश्चायं नैर्मल्यात्मा । न तु पावित्र्यं, स्वतः 'पवित्रं[1] परमेशतत्त्व' मित्यभियुक्तोक्तेः अन्यप्रयुक्तपावित्र्यानपेक्षणात् । तथा चोक्तं **रामायणे** —

---

1 पवित्रमिति नास्ति (क)

पपात जाह्नवी पुण्या पुण्ये रुद्रस्य मूर्धनि । इति ।

अथ वा कपरं गङ्गाप्रवहं दायति शोधयति पवित्रीकरोतीत्यर्थः कर्मण्युपपदे 'आतोऽनुपसर्गे कः' (३-२-३) इति कप्रत्यय इति पूर्ववत् । अन्तर्भावितण्यर्थात् । तथा चोक्तं **रामायणे** —

भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः ॥ इति ।

परिकरालङ्कारेण हेतुत्वाभिप्रायकं तोयविशेषणमत्रेत्यभिप्रेत्याह — अथ **सुरधुनीशोधनादिति** । अथ वा कपरं गङ्गाप्रवाहं ददाति भगीरथायेति वा तथेत्याशयेनाह—तत्प्रदानादिति । अथवा कपर्दो जटानां ग्रन्थिविशेषः, कपर्दोऽस्य जटाजूटः इति चामरः इत्यभिप्रायेणाह—कचग्रन्थेर्भेद इति । यद्वा कपर्दशब्दो गुणविशेषपरः । कपर्द इत्यधिकृत्य भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । इति सूतसंहिताटीकाकारोक्तकोशवचनादित्याशयेनाह—**अतिशयितगुणः** स्यादिति । अचिन्त्यापरिमितानन्दसंदायिगुणविशेषो वा कपर्दपदार्थ इत्यर्थः । अथ वा कपर्दो वराट इति, [1]"कपर्दः खण्डपरशोर्जटाजूटे वराटकः" इति विश्वः इत्यभिप्रायेणाह— **कपर्दो वराट** इति ।[1]

**तदाधार** इति । योगेन रूढ्या वा कपर्दपद[2]प्रतिपाद्यानां जटाकलापगुणविशेषवराटकानामाधार आश्रय इत्यर्थः । एवं क्रमेणोपदर्शित[2]कपर्दपदव्युत्पत्तीनां यथासंभवं क्रमेण प्रयोजनान्याह पूरस्थगनमित्यादिना। अत्र च कपरा जलप्रवाहेण दायति शुध्यतीति प्रथमव्याख्याने तावानपि जलप्रवाहः प्रोञ्छनवस्त्रानुषङ्गिवारिवत् शुद्धिमात्रफलकत्वेन कथञ्चित् किञ्चिदपि भूमौ न[3] निपपातेति पर्यवसानात् गङ्गातिरोभावलक्षणमहिमोक्त्या पूरस्य गङ्गाप्रवाहस्य स्थगनं स्थिरीभावं प्रथयसि प्रकटीकरोषि इति उत्तरेण

---

1 अयं भागः न दृश्यते (ख,ग) 2 अयं भागः न दृश्यते (ख) 3 निपातेति (ग)

संबन्धः । कपरं गङ्गाप्रवाहं दायति शोधयतीति द्वितीयव्याख्याने च —

एवंविधे कलियुगे दोषाणामेकशोधनम् ।
महादेवनमस्कारो ध्यानं दानमिति श्रुतिः ॥

इति **कौर्मोक्त्या,**

अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेद्देवमीशानं स बाह्याभ्यन्तरः शुचिः ॥ इति

**शिवधर्मवचनाच्च** परमशिवस्य सर्वातिशयपावनत्वोक्त्या —

श्रुताभिलषिता दृष्टा स्पृष्टा पीतावगाहिता ।
गङ्गा तारयते नृणामुभौ वंशौ विशेषतः ॥

इति आनुशासनिकवचनप्रतिपन्नं यत् गाङ्गं पावित्र्यं तदपि[1] प्रथयसि त्वमेवेत्यर्थः । "भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः" इत्युपदर्शित-प्रमाणबलात् तावतोऽपि गङ्गापावित्र्यस्य भगवतः परमशिवस्य जटास्पर्श एव कारणमिति भावः । अत एव —

जटास्वरूपेण समस्तसागराः
कुलाचलाः सिन्धुवहाश्च सर्वतः ॥

इत्यादिना सिन्धुवहादीनां महानदीनां जटाश्रयत्वोक्तिरपि संगच्छते इति । कपरं गङ्गाप्रवाहं ददातीति तृतीयव्याख्याने अविद्यमानस्य अर्थस्य दानकर्मत्वासंभवेन दूर्वाग्रा[2]वलम्ब्यम्बुकणिकारूपेणातिरोभावितस्य गङ्गाप्रवाहस्य योऽयं प्रकाशः प्रकटीकरणं, तत्क्षमत्वं तत्सामर्थ्यं प्रथयसीत्यर्थः । कपर्दो वराटः इति चरमव्याख्याने परमशिवावतारविशेषस्य मैरालाख्यस्य[3]या तनुर्मूर्तिः सा मैराली । तादृशीं तनुं प्रथयसि प्रकटीकरोषि इत्यर्थ इति ।

---

1 तदसि (ख) 2 दूर्वाग्रा (क) 3 मै.ालाख्या (क)

**तन्त्रचिन्तामणौ** मैरालाख्यशिवावतारस्य कपर्दमालाधारणकथायाः[1] विस्तरेण स्मरणात् । छगण्डपदात् स्वार्थिकस्तद्धितः छन्दसः आनुगुण्याय कृतः । 'छगलण्डे कपर्दिनम्' इति अष्टषष्टिक्षेत्राध्याये **पद्म[2]पुराणात्** ।

श्रुतिप्रसिद्धं चेदं नाम । "नमः कपर्दिने च व्युप्तकेशाय च" इति श्रुतेः । मेघविस्फूर्जिताख्यं वृत्तमिदम् । तदुक्तं **गारुडपुराणे** –

रसर्त्वश्वैर्य्मौन्सौ रो मेघविस्फूर्जिता रगौ इति ।

प्रतिपादं यगणः मगणः नगणः सगणः रगणद्वयं गुरुश्च । षड्भिः षड्भिः[3] सप्तभिश्च यतिरित्येतद् वृत्तं मेघविस्फूर्जिताख्यं[4] भवतीत्यर्थः । ॥१४

**(ओम् नीललोहिताय नमः)**

**नेमाङ्गनं प्रकृतिपूरुषं रवे-**
**रन्तश्च रूपयुगवद्वपुस्तव ।**
**वेधोऽलिकाम्बुकणतोऽरुणासिता-**
**ज्ञातः शिव त्वमिति नीललोहितः ॥ १५ ॥**

नेममर्धमङ्गना यस्य वपुषः, तादृशं तव शरीरमित्युक्त्या "त्रयोदशं हरेरर्धमर्धनारी चतुर्दशम्" इति वातुलशुद्धवचनप्रतिपन्नार्धनारीश्वरात्मकत्वेन नीललोहित इत्युक्तं भवति तथा च श्रुतिः —

"ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्" इति ।

पिंगलं लोहितमित्यर्थः ।

वेदपादस्तवेऽपि —

"अर्धं पुंलक्षणं वन्दे पुरुषं कृष्णपिंगलम्" इति ।

---

1 विस्तार (ग) 2 'द्म' इत्यक्षरं कप्रतौ लुप्तम् 3 नास्ति (क)
4 ............ख्यं वृत्तं (ग)

(पिङ्गलं लोहित इत्युक्तं भवति । तथा च श्रुतिः—ऋतं सत्यं परब्रह्म)[1] प्रकृतिपुरुषात्मकत्वाद्वा तथेत्याह —**प्रकृतिपुरुषमिति** । प्रकृतिश्च पुरुषश्च तयोः समाहारः प्रकृतिपुरुषम् । परमशिवाश्रितायाः विद्यावारिकायाः प्रकृतेः तमःप्रधानतया नीलत्वौचित्यात्[2] ।

ब्रह्माण्डान्तर्वर्त्यशेषप्राणिराशिप्रवर्तकस्य च पुरुषस्य रजःप्रधानतया लौहित्यौचित्याच्च[3] इति भावः । तथा चोक्तं लैङ्गे —

नीलश्च लोहितश्चैव प्रधानपुरुषान्वयात् । इति । भानुमण्डलान्तर्ध्येयरूपत्वाद्वा तथेत्याह—रवेरन्तश्चेति । च शब्दः इतीत्युत्तरत्र संबध्यते । "इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु" इति चामरः । सूर्यमण्डलान्तर्वर्तित्वेन[4] श्रूयमाणं यद्रूपद्वयं कण्ठावच्छेदेन नीलत्वं तदन्यावच्छेदेन लौहित्यं [5]तद्वद्वपुः मूर्तिः तवेत्यर्थः ।

तथा च श्रूयते —

य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः, आ प्रणखात् सर्व एव सुवर्णः असौ योऽवसर्पति नीलग्रीवो विलोहितः इति च ।

तथा च —

अर्धाङ्गनाशरीरत्वात् प्रधानपुरुषान्वयात् ।
भानुमध्यपरामर्शाद् आविर्भावाच्च भावतः ॥

इति हेतुचतुष्टयेनापि नीललोहितपदप्रतिपाद्यो भवसीत्यर्थः । आविर्भावादिति चरमहेतुं दर्शयति—**वेधोलिकेत्यादि** ।

---

1 अयमंशः अधिकतया दृश्यते (क) 2 लौहित्यौचित्यात् (ग), लोहित्वोचित्वात् ख) 3 नीलत्वौचित्याच्च (ख,ग) 4 मण्डलवर्तित्वेन (ग) 5 तद्यद्वपुः (ग)

वेधसो ब्रह्मणः यदलिकं ललाटं, तद्भवो योऽयमम्बुकणः स्वेदबिन्दुस्तस्मादित्यर्थः । अरुणासितात् लोहितनीलात् जातः आविर्भूतः, तथा च[1] सृज्यमानायाः प्रजायाः[2] वृद्धिकामश्चतुर्मुखः पुत्रेच्छातः परमशिव एव पुत्रो मे भूयादित्यभिसन्धाय अग्नौ जुहाव । जुह्वतस्तस्य ललाटात् समुद्गतः स्वेदबिन्दुरग्नौ पतन् लोहितो भूत्वा पुनर्नीलः सन्नुदतिष्ठत् । ततो भगवान् नीललोहितनामा आविरभूदित्यादिकमशेषेण प्रपञ्चितं **शिवपुराणे** ।

यथा —

भूत्वा लोहितमाश्चैव पुनर्नीलमभूत्ततः ।
नीललोहित इत्येव तेनासावभवत्प्रभुः[3] ॥

इत्यादि । तथा **लैङ्गेऽपि** —

वृद्ध्यर्थं भगवान् ब्रह्मा पुत्रैः स्वैर्मानसैः सह ।
दुश्चरं विचचारेशं संमुद्दिश्य तपः स्वयम् ॥

[4]तुष्टश्च तपसा तस्य भावं ज्ञात्वास्य वाञ्छितम् ।
ललाटमभिनिर्भिद्य ब्रह्मणः पुरतः स तु ॥[4]
पुत्रस्त्वहमिति प्रोच्य स्त्रीस्वरूपोऽभवत्तदा ।
तस्य पुत्रो महादेवो ह्यर्धनारीश्वरोऽभवत् ॥ इति ।

इदं च श्रुतिप्रसिद्धं नाम ।

"द्रापे अन्धसस्पते दरिद्रं नीललोहित" इति श्रुतेः ।

ललिताख्यं वृत्तमिदं, तदुक्तं **वृत्तरत्नाकरे** —

"धीरैरफाणि[5] ललिता तभौ जरौ" इति ।

---

[1] तथा चेति नास्ति (क) [2] स्रष्टुः (ग) [3] तेनाविरभवत्प्रभुः (ख)
[4] अयं श्लोकः नास्ति (क) [5] धीरैरभाणि (ख)

प्रतिपादं तगणः भगणः जगणः रगणश्च इत्येतत्प्रतिपादकं ललिताख्यं वृत्तं भवतीत्यर्थः । ॥ १५ ॥

शङ्करः शूलपाणिश्च खट्वाङ्गी विष्णुवल्लभः ।
शिपिविष्टोऽम्बिकानाथः श्रीकण्ठो भक्तवत्सलः ॥

एतान्यष्टौ नामानि निर्वक्ति—कर एवेत्यादिभिः ।

(ओम् शङ्कराय नमः)

**कर एव सुखं धत्से भक्तानां कुरुषे च तत् ।**
**पीठे चन्द्रपुराभिख्ये नाम्ना ख्यातोऽसि शङ्कर ॥ १६ ॥**

करोतीति करः । शं सुखं करे यस्येति शङ्करः । शमित्युपपदे कृञ्धातोरच्प्रत्ययात्, इत्यभिप्रायेणाह कर एवेत्यादि । पीठ इति । अष्टषष्टिपीठान्तःपरिगणितं यत् चन्द्रपुराख्यं पीठं तत्रत्यलिङ्गे[1] शङ्करेश्वरत्वेन प्रसिद्धत्वाच्च शङ्करपदनिर्वाच्यो भवसीत्यर्थः । स्पष्टमन्यत्[2] ।

इदं च श्रुतिप्रसिद्धं नाम ।

"नमः शङ्कराय च मयस्कराय च नमः
शिवाय च शिवतराय च ।" इति ।

पथ्यावक्त्राख्यं वृत्तमिदम् । तथा च पैङ्गलसूत्रम् । **पथ्यायुञ्जोऽज्** प्रतिपादं प्रथमाक्षरोत्तरं मयस्तजभान्यतमो गणः । विषमपादयोश्चतुर्थाक्षरोत्तरं यगण एव । समपादयोर्जगण एव । पादान्तिमाक्षरं[3] च गुरुलध्वन्यतरदित्येतद्वृत्तं पथ्यावक्त्राख्यं भवतीत्यर्थः । ॥ १६ ॥

---

[1] न शङ्करेश्वरत्वेन (ग) [2] नास्ति (क) [3] पादान्तमाक्षरं (ख)

( ओम् शूलपाणये नमः )

शिव तृप्तपुरस्य लिङ्गमध्ये
प्रकटस्संस्त्रिगुणात्मकाललोकैः ।
शुचिशक्तिदशादिभिस्त्रिशूलं
विदधत्त्वं प्रथितोऽसि शूलपाणिः ।। १७ ।

[1]शूलं पाणौ यस्येति वा शूलयुक्तः पाणिर्यस्येति वा शूलपाणिः ।[1] त्रिगुणेत्यादि गुणाश्च आत्मानश्च कालाश्च लोकाश्चेति । तथा शुचयश्च शक्तयश्च दशाश्च आदिश्चेति च द्वन्द्वः । शुचयोऽग्नयः । गुणात्मकाललोकशुचिशक्तिदशादिभि[2]स्त्रिभिस्त्रिभिरिति[2] त्रित्वस्योत्तरत्रापि सम्बन्धः । तथा च सत्वरजस्तमोरूपैर्गुणैः, आत्मान्तरात्मपरमात्माख्यैरात्मवर्गैः, भूतभविष्यद्वर्तमानाख्यैः कालैः स्वर्गमृत्युपातालाख्यैर्लोकैः लोकैः, गार्हपत्याहवनीयदक्षिणाख्यैरग्निभिः, इच्छाज्ञानक्रियात्मिकाभिः शक्तिभिः बाल्ययौवनकौमाराख्यैरवस्थाविशेषैश्च जाग्रत्स्वप्नसुषुप्तिभिर्वा अवस्थाभिरादिपदग्राह्याभिः, सृष्टिस्थितिसंहृतिरूप[5]कृत्यादिभिश्च परिकल्पितं यत् त्रिशूलं तद्विधारणात् शूलपाणिरिति प्रसिद्धो भवसीत्यर्थः ।

तथा चोक्तं **पद्मपुराणे** —

अथ यज्ञात्मको विष्णुस्त्रिशूलं मनसाकरोत् ।
गुणावस्थाग्निकालात्मलोकशक्तित्रयात्मकम् । इति ।

अथ एव **शैवागमादौ** —

इच्छाज्ञानक्रियारूपास्त्रिशूले शक्तयो मताः ।

---

[1] ख-गयोः अयं भागो नास्ति [2] त्रिभिरिति (ख,ग) [3] शक्तिभिरिति नास्ति (क)
[4] कौमारकाख्यै (ग) [5] संहृत्यादिरूप (ख)

तथा —

त्रैगुण्यं शूलमेतस्य परशुः सत्यनिष्ठता । इति च ।

एवंभूतस्य त्रिशूलस्य करस्थत्वोक्त्या अनिर्वचनीयसामर्थ्याश्रयीभूताया अपि मायायाः स्वाधीनत्वमुक्तं भवति । शिव तृप्तपुरस्थलिङ्गमध्य इति । शिवेति सम्बुद्धिः । तृप्तपुरमिति क्षेत्रविशेषः । स्पष्टमन्यत् । इदं च श्रुतिसिद्धं नाम । "तस्य ललटात् त्र्यक्षः शूलपाणिः पुरुषोऽजायत" इति । औपच्छन्दसिकाख्यं वृत्तमिदम् । तथा च पैङ्गलं सूत्रम् । 'औपच्छन्दसिकम्' विषमपादयोः षण्मात्रोत्तरं रगणयगणयोः, समपादयोस्तु अष्टमात्रोत्तरं तावेव चेत् तदौपच्छन्दसिकाख्यं मात्रावृत्तं भवतीत्यर्थः । मात्रास्वपि केचन नियमाः आकरे द्रष्टव्याः ।

(ओम् खट्वाङ्गिने नमः)

**द्रुहिणस्यैकं वदनं मिथ्यावचनं दृष्ट्वा सद्यश्छिन्नम् ।**
**न ततो वेधोमरणं शम्भोः क्व पुनर्हिंसाजन्यं पापम् ।।**
**अथ दण्डार्धं वहसि त्वं तज्जनशिक्षार्थं खट्वाया वा ।**
**चरणं यत्तद्विमलं सत्त्वं प्रथितस्तेन त्वं खट्वाङ्गी ।। १८ ।।**

खट्वाङ्गं दण्डार्धं इत्यापस्तम्बस्मृतेः दण्डार्धमेव खट्वाङ्गपदार्थः । तच्च दण्डस्यार्धमिति वा । नरशिरःकपालप्रोतदण्डविशेषो वा दण्डार्धमित्यन्यदेतत् । तद्वहसि । लोकशिक्षार्थं स्वीकरोषि[1] इति खट्वाङ्गीत्यर्थः ।

ननु[2] ब्रह्मशिरोलवनप्रयुक्तपापापहरणार्थमेवेदं खट्वाङ्गमुररीक्रियताम् ।

कपालपाणिः खट्वाङ्गी ब्रह्मचारी सदोत्थितः ।
पूर्णैर्द्वादशभिर्वर्षैः ब्रह्महा प्रतिमुच्यते ।।

---

[1] स्वीकरोति (ख,ग) [2] न तु (ग)

इति **शान्तिपर्वणि** प्रायश्चित्तधारणार्थत्वेन[1] प्रतिपादितत्वात् । तत्किं जनशिक्षार्थमित्युक्तम् ? इत्यत[2] आह—**द्रुहिणस्येत्यादि** । द्रुहिणस्य ब्रह्मणः मिथ्यावचनं मिथ्यारूपं मृषारूपं वचनं यस्मिन्, तादृशमेकं वदनं सद्यः तत्काल एव छिन्नं लूनं संहृतमिति यावत् । मिथ्यावचनं दृष्ट्वेत्यनेन मिथ्यावचनदर्शनस्योच्छेदहेतुत्वप्रतिपादनात् स्वस्य प्रागुपदर्शितसत्यसन्धत्वमुक्तं भवति ।

ननु "न हिंस्यात् सर्वा भूतानि" "अहिंसा परमो धर्मः" "न ब्राह्मणं हन्यात्" इत्यादिबहुतरप्रमाणपरिवर्जितब्रह्महननादिदोषप्रसक्त्या प्राणिहिंसकत्वादिरूपक्रौर्यादिधर्मधर्मितया[3] तथा —

"त्रिलोचनं नीलकण्ठं प्रशान्तम्"

इत्यादिप्रमाणसिद्धप्रशान्तत्वादिस्वरूपधर्मविरोधः इत्याशङ्क्याह--**न तत इति** । ततः तावन्मात्रेण ब्रह्मशिरोलवनमात्रेण वेधोमरणं नाभूदित्यर्थः । अत एव न हिंसाप्रयुक्तपापानुबन्धोऽपीत्याह—**क्व पुनरिति** । एकस्मिन् शिरस्युच्छिन्ने अवशिष्टानामनपायादिति ।

*अवशिष्टानामनपायात् [4]कुतो हिंसा प्रसक्तिः ? कुतस्तज्जन्यं पापं परमशिवस्य सम्भवति ? इत्यर्थः ।

[5]"अथ तथापि दण्डार्धं वहसीति यत् तत् जनशिक्षार्थमेव । न तु स्वाभिलषितप्रयोजनार्थमित्यर्थः ।"[5] स्वाभाविकज्ञानबलक्रियत्वेन परमशिवस्येच्छामात्रशक्तिप्रधानत्वादिति भावः । तथा च प्रत्यवायरहितेनापि परमशिवेनैवं प्रायश्चित्तमाचरितं यदि किमु वक्तव्यमल्पमतिमदाधुनिक-

---

[1] प्रायश्चित्तं विधारणार्थत्वेन(ग), प्रायश्चित्ताङ्गविधारणार्थत्वेन (ख) [2] आह आह(ग)
[3] तथेति नास्ति (क) *....* अयं भागः नास्ति (क) [4] नोक्तहिंसाप्रसक्तिः (ग)
[5]....[5] नस्ति (क,ख)

जीवराशेरित्यापामरसाधारणाखिललोकप्रायश्चित्तवृत्तिदार्ढ्यार्थमित्यर्थः । प्राण-वियोगाभावेऽपि द्रुहिणशिरोलवनमात्रेण तद्धननविहितप्रायश्चित्ताचरणे प्रवृत्तिर्यदि किमु साक्षात्तद्वधकर्तुस्तदाचरणे वक्तव्यमित्यभिप्रायेणाह—**वहसीति** । वर्तमानार्थकलट्प्रत्ययेनाविशेषेण यावत्कालपरामर्शे सार्वकालीनस्य तद्धारणस्य प्रयोजनाकाङ्क्षायामेतस्यापि प्रयोजनत्वेनोपवर्णयितुमुचितत्वादिति भावः । तथा चोक्तं **ब्रह्माण्डपुराणे** –

यद्यप्यमुक्तप्राणोऽसि तथाप्येषोऽनघोऽपि सन् ।
भिक्षाचरणमात्रेण प्रायश्चित्ती भविष्यति ॥
एवं कृतेन केनापि ब्रह्मद्रोहः कृतो भवेत् ।
इत्युक्त्वासौ गणेशानो देवदेवोऽभ्यभाषत ॥
ब्राह्मणा नावमन्तव्या इति लोकस्य क्लृप्तये ।
युवां भिक्षाटनं कर्तुं नियुक्तावनघौ मया ॥ इति ।

अथवा खट्वायाः मञ्चस्याङ्गं पादः, सोऽस्त्यायुधत्वेनेति खट्वाङ्गी । खट्वायुधवान् इत्यर्थः ।

तदुक्तं **कामिके सदाशिवप्रतिष्ठापटले** —

पिङ्गलाभजटाजूटं दशदोर्दण्डमण्डितम् ।
अभयं च प्रसादं च तथा शक्तिं त्रिशूलकम् ॥
खट्वाङ्गं दशभागस्थैर्वहन्तं करपल्लवैः ।
भुजङ्गं चाक्षमालां च डमरुं नीलपङ्कजम् ॥
बीजापूरं च वामस्थैः वहन्तं सुप्रसन्नकम् ॥ इति ।

इदं च खट्वाङ्गं[1] न प्राकृतमित्याह—विमलं सत्वमिति । शुद्ध-सत्त्वप्रवर्तकेच्छाज्ञानक्रियारूपशक्तित्रयात्मकमित्यर्थः ।

[1] नेति नास्ति (ग)

तदुक्तं शैवागमे —

इच्छाज्ञानक्रियारूपास्त्रिशूलं शक्तयो मताः ।
उक्तास्ता एव खट्वाङ्गे शुद्धसत्त्वप्रवर्तकाः ॥ इति ।*

एतेन —

महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः ।

इति श्रुतिसिद्ध[1]शुद्ध[1]सत्त्वप्रवर्तकत्वं सूचितम् । [2]शुद्धसत्त्वस्वरूपं [3]यत् खट्वाङ्गं तद्वहसीति पूर्वेण सम्बन्धः । **तेन** इति । उपदर्शितरीत्या उक्तार्थप्रतिपादकत्वेन खट्वाङ्गीति पदप्रतिपाद्यो भवसीत्यर्थः ।

शम्भुसंज्ञकं वृत्तमिदम् । तथा चोक्तमभियुक्तैः —

दशबाणाश्वैर्यतिधारी स्तौ यभमा मो गः शम्भुः प्रोक्तः । इति ।

प्रतिपादं सगणः तगणः यगणः भगणः मगणद्वयं गुरुश्च । दशभिः पञ्चभिश्चतुर्भिश्च यतिरित्येतद्वृत्तं शम्भुसंज्ञकं भवतीत्यर्थः ।

नवबाणाक्षैर्यतिधारीत्यपि पाठान्तरम् ।
तच्च [4]उदाहरणान्तरविषयमन्वेष्टव्यम्[4] ॥ १८ ॥

## (ओम् विष्णुवल्लभाय नमः)

विष्णुवल्लभः उपासकत्वेन प्रीतिविषयो यस्येत्यभिप्रेत्याह—

**वितरन् हरये तपस्यते पदरेखाजनितं सुदर्शनम् ।**
**वपुरर्धमपि प्रियाय ते प्रथितस्त्वं भुवि विष्णुवल्लभः ॥ १९ ॥**

वितरन्निति । तथा च जलन्धरवधार्थं स्वपादाङ्गुष्ठरेखातः आविर्भूतं यत्सुदर्शनं,

---

[1] नास्ति (क,ख) [2] सूचितमिति नास्ति (क) [3] यावत् (ग)
[4] उदाहरणान्तरमन्वेष्टव्यम् (ग)

तत् चिरकालं तपस्यते उपासीनाय विष्णवे वितरन् ददानः त्वं विष्णुप्रियो भवसीत्यर्थः । तथा चोक्तमन्यत्र —

चरणाङ्गुष्ठरेखोत्थं जलमध्ये सुदर्शनम्[1] ।
प्रदाय विष्णवे शूलं स्वयं जग्राह वैष्णवम् ॥ इति ।

शैवं शूलं दत्त्वा वैष्णवं सुदर्शनं स्वयं[2] जग्राहेत्यर्थः ।

विष्णोरुपासकत्वं च **सौप्तिकपर्वणि** अश्वत्थामानं प्रति परमशिवेनैव प्रदर्शितम् —

सत्यशौचार्जवत्यागैस्तपसा नियमेन च ।
क्षान्त्या धृत्या च भक्त्या च कर्मणा मनसा गिरा ॥
यथावदहमाराध्यः कृष्णेनाक्लिष्टकर्मणा ।
तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते ॥ इति ।

अथवा विष्णुर्वल्लभः उपास्यत्वेन प्रिय इति तथेत्याशयेनाह— **वपुरर्धमपीति** । ते तव प्रियाय त्वद्भजनैकपरायणाय अर्धं वपुरपि वितरन्निति पूर्वेण सम्बन्धः । वपुरपि इत्यपिना भोगायतनसमष्ट्यात्मकत्वेन शरीरस्य परमप्रेमास्पदतया दातुमयोग्यस्यापि दाने[3] किमन्यासामणिमादि-सिद्धीनां दाने वक्तव्यम्—इति निसर्गसिद्धं पारमेश्वरमौदार्यमित्ययमर्थः[4] सूचितः । तथा च परस्परप्रेमास्पदीभूत इत्यर्थः तात्पर्यविषयीभूत इति द्रष्टव्यम् ।

"उमासहायं परमेश्वरं प्रभुम् ।"

इत्युपक्रम्य,

"स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः"

इत्यादिश्रुतेः ।

---

[1] नास्ति (ग) [2] नास्ति (ग) [3] किमन्येषाम् (क) [4] अर्थतः (ग)

" आवयोरन्तरं नास्ति शब्दैरर्थैश्च गोपते "

इत्यादिस्मृतेश्च परस्पराभेदस्य स्पष्टीकृतत्वात् ।

" त्रयोदशं हरेरर्धमर्धनारी चतुर्दशम् "

इत्यादिव्यातुलशुद्धवचनप्रतिपन्नार्धनारीश्वरहर्यर्धादिघटितपञ्चविंशतिमूर्तीनामपि परस्परं परमशिवाभेदस्यान्यत्र प्रपञ्चितत्वादिति सर्वमवदातम् ।

वैतालीयाख्यं वृत्तमिदम् । तथा चोक्तं पैङ्गले— वैतालीयं द्विस्वरा अयुक्पादे युग्वसवोन्तेर्लग इति । अयुक्पादः विषमपादः । युक्पादः समपादः । द्विरिति वसव इत्यत्राप्यन्वेति । स्वराः सप्त, वसवः अष्टौ, अधिकारसूत्रान्मात्रा इत्यनुवर्तते । तथा च विषमपादयोः चतुर्दशमात्राः, समपादयोः षोडशमात्राः । पादचतुष्टयेऽप्यन्तेर्लगः इत्यन्वेति । रगणः लघुः गुरुश्च इत्यक्षरपञ्चकात्मिकाः अष्टौ मात्राः अन्ते पादावसानवर्तिन्यः[1] । तथा च विषमपादयोः षण्मात्राः पूर्ववर्तिन्यः[2] अन्याश्चान्त्यवर्तिन्यः[3] इत्येतद्वैतालीयसंज्ञकं मात्रावृत्तं भवतीत्यर्थः । ॥ १९ ॥

## (ओम् शिपिविष्टाय नमः)

**पशवः परमात्मनि धीविरहात्**
**द्विपदोऽपि नराश्च सुराः शिपयः ।**
**तदनुग्रहकृद्धृदयं प्रविशन्**
**प्रथितोऽसि विभो शिपिविष्ट इति ॥ २० ॥**

शिपयः पशव इत्यन्वयः । शिपयः शिपिपदवाच्याः[4] । " यज्ञो वै विष्णुः, पशवः शिपिः " इति श्रुतेः । ते च पशवः किं परिदृश्यमानाः प्राकृताः गवादिरूपाः ? नेत्याह । द्विपदोऽपि इत्यादि । द्विपात्त्वोपलक्षिताः ये नराः सुरा वा, सर्वेऽपीत्यर्थः ननु लोमवल्लाङ्गूलवत्त्वस्य[5] चतुष्पात्त्वस्य वा

---

1-2-3 वर्तिनः (क) 4 वाच्याः पशव इत्यर्थः (ग) 5 लाङ्गूलत्विस्य (क)

पशुपदप्रवृत्तिनिमित्ततया कथमुपदर्शितानां तथात्वम्? अत आह— **परमात्मनीति**। विषयत्वं सप्तम्यर्थः। तथा च परमात्मविषयकस्वरूपावगमाभावादज्ञानाश्रयत्वाविशेषेणोपदर्शितानामपि पशुपदप्रवृत्तिविषयत्वं संभवत्येवेति भावः। तथा चोक्तं **शारीरके** भगवत्पादैः—पश्वादिभिश्चाविशेषादिति। तथा **लैङ्गे**ऽपि—

देवादयः पिशाचान्ताः पशवः परिकीर्तिताः।
तेषां पतित्वात् सर्वेशो भवः पशुपतिः स्मृतः॥ इति।

[1]तदनुग्रहेति। तेषां शिपिपदप्रतिपाद्यानां यावन्नरसुरादिप्रपञ्चात्मकपशूनां योऽयमनुग्रहः कृपावलोकनविषयीकरणं, तत्करोतीति तदनुग्रहकृत्। **हृदयं प्रविशन्निति**। अशेषप्राणिनां हृत्पुण्डरीकं प्रविशन्। "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः। [2]तत्तत्प्राणिविशेषान्तर्यामितयेति यावत्। वस्तुतः तदीयमानसध्याने विषयीभाव एव हृदयप्रवेशः। तथा च अनाद्यविद्योपरतान्तःकरणानामशेषजन्तूनामपि अनुग्रहार्थं तत्तत्प्राणिविशेषान्तःस्फुरितः सन् तथा प्रसिद्धो भवसीत्यर्थः। शिपिषु विष्टः शिपिविष्टः इति[3] नामव्युत्पत्तिः। श्रुतिप्रसिद्धं चेदं नाम—

"नमो गिरीशाय च शिपिविष्टाय च" इति।

तोटकाख्यं वृत्तमिदम्। तथा च पैङ्गलं सूत्रम्। तोटकं स इति। प्रतिपादं चत्वारोऽपि सगणाः यत्र भवन्ति, तत्तोटकाख्यं वृत्तं भवतीत्यर्थः।
॥ २० ॥

(ओम् अम्बिकानाथाय नमः)

**नाथसि हिमाचलमुमां मनसा तां नाथसेऽथ तन्नाथः[4]।**
**प्रकटोऽसि देविकायां लिङ्गे तेनाम्बिकानाथः॥ २१॥**

---

[1] तदनुग्रहेऽपि (ख) [2] तत्प्राणि (क) [3] इति च (क) [4] नाथसे तन्नाथः (क)

अम्बिकां नाथति याचतीति वा, अम्बिकां नाथते आशास्त इति वा, अम्बिकायाः नाथः पतिरिति वा । अम्बिकायाचकः, अम्बिकेच्छुः, अम्बिकापतिरिति वा यथायथमर्थमभिप्रेत्य परमशिवाभिमुख्यं द्योतयन्नाह **नाथसी-त्यादि** । हिमाचलं प्रति उमां नाथसि याचसे । अथवा मनसा तां नाथसे आशास्से इत्यन्वयः । नाथनाधृ याञ्चोपतापैश्वर्याशीःषु इति पठितस्य धातोरनुदात्तेतोऽप्याशिष्यर्थ एवात्मनेपदस्य 'आशिषि नाथः'[2] इति सूत्रेण नियमनात् । अत एव नाथस इत्यात्मनेपदान्तस्य धातोराशासनमेवार्थः । **देविकेति** । देविकाख्ये क्षेत्रविशेषे विराजमानं यल्लिङ्गं तत्राम्बिकानाथेश्वरत्वेन प्रकटः प्रसिद्धः इत्यतोऽप्यम्बिकानाथपदप्रतिपाद्यो भवसीत्यर्थः ।

श्रुतिप्रसिद्धं चेदं नाम ।

"नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय
हिरण्यपतयेऽम्बिकापतये उमापतये पशुपतये नमो नमः ।" इति ।

इदं चार्यावृत्तम् । स्वरार्धं चार्यार्धमित्यादिसूत्राष्टकेनोक्तम् । तल्लक्षणमाकरे द्रष्टव्यम् । ॥ २१ ॥

## (ओम् श्रीकण्ठाय नमः)

**क्ष्वेलं गङ्गामिन्दोर्लेखामाद्योत्थां वा कान्तिं कण्ठे ।**
**बिभ्रन्माण्डल्येशे लिङ्गे विख्यातोऽसि त्वं श्रीकण्ठः ॥ २२ ॥**

अत्र च श्रीयुक्तः कण्ठो यस्येति मध्यमपदलोपिसमासोत्तरेण[3] बहुव्रीहिणा विषानुलिप्तकण्ठवान् शोभोपरक्तकण्ठवान् वा अर्थ इति केषाञ्चिद् व्याख्यानम् । तत्स्पष्टत्वादुपेक्ष्य प्रकारान्तरेण व्युत्पत्तिमनुसरति क्ष्वेलमित्यादि ।

---

[1]-[1] अयं भागः नास्ति(क) [2] वार्तिकमिदम् । आशिषि नाथः (२-३-५५) इति सूत्रं तु षष्ठीविधायकमिति द्रष्टव्यम् । [3] ........ लोपिसमासे (ख,ग)

श्रीशब्दः क्ष्वेलपरः, तज्जन्यशोभापरश्च ।

श्रीर्वेषरचनाशोभासंवत्सरविशाखिषु ।

वाणीलक्ष्मीलवङ्गेषु विषे बिल्वेऽप्यथ त्रिषु ॥ इति

**नानार्थरत्नमालावचनात्** । कमित्यव्ययस्य जलवाचितया जल-सामान्यलाभे प्रकृते च तद्विशेषविवक्षया गाङ्गमेव जलं कम्शब्दार्थः ।[1] ठशब्दः चन्द्रवाची । "बृहद्ध्वनौ च ठः प्रोक्तः तथा चन्द्रस्य मण्डले" **इत्यनेकार्थध्वनिमञ्जर्युक्तेः** ।

तथा च श्रीश्च कम् च ठश्चेति श्रीकण्ठः इति द्वन्द्वोत्तरमत्वर्थाच्[2]-प्रत्ययान्तेन श्रीकण्ठपदेन हालाहलं विषं तज्जन्यां कान्तिं च कण्ठावच्छेदेन, गाङ्गं जलं चान्द्रीं कलां च तदन्यदेशावच्छेदेन वहसीत्यर्थः । कण्ठे बिभ्रदित्यत्र[3] कण्ठशब्दस्तदन्यदेशस्यापि उपलक्षकः ।

**माण्डल्येश** इति । माण्डल्येशाख्ये क्षेत्रविशेषे श्रीकण्ठेश्वरत्वेन प्रसिद्धत्वाद्वा[4] श्रीकण्ठपदप्रतिपाद्यो भवसीत्यर्थः । विद्युन्मालाख्यं वृत्तमिदम् । तथा च पैङ्गलं सूत्रम्—विद्युन्माला मौ गौ । प्रतिपादं मगणद्वयं गुरुद्वयं चेत्येतद्वृत्तं[5] विद्युन्मालाख्यं भवतीत्यर्थः । ॥ २२ ॥

**( ओम् भक्तवत्सलाय नमः )**

*दासानुरस्यावपसीति तर्णकान्  
भक्तात्मकानोदनबालकोभयम् ।  
पोषाय गृह्णास्यथ तेषु सौहृदं  
पुष्णासि तस्मादसि भक्तवत्सलः ॥ २३ ॥

---

[1] लशब्दः (ख) [2] मत्वर्थात् (ग), मत्वर्थात् कप्रत्ययान्तेन (ख)
[3] कण्ठदेशस्तदन्य (ख,ग) [4] प्रसिद्धत्वात् (ख,ग) [5] चेत्येतत्प्रतिपादिकम् वृत्तम् (क) *इदं पद्यं न लिखितम् (ख) । अस्य व्याख्यानं तु तत्रापि लिखितम् ।

भक्तान् दासान् वत्से उरसि लाति गृह्णाति इति भक्तवत्सलः। "उरो वत्सं च वक्षश्च" इत्यमरः। अथवा वत्सशब्दः तर्णकपरः। तथा च भक्ताश्च ते वत्साश्च तान् लाति [1]इति वा तथा। [2]भक्तशब्दः ओदनपरः। भक्तानि च वत्साश्च तदुभयं लाति लक्षणार्थं गृह्णाति इति वा तथा[2]। अथवा 'वत्सांसाभ्यां कामबले' इति मत्वर्थे लप्रत्ययसमवधाने च वत्सशब्दः कामवचनः। तद्वान् वत्सलः। भक्तेषु वत्सलः प्रेमातिशयशाली वा तथा इत्यभिप्रायेणाह—**दासानुरस्यावपसीत्यादि**।

आवपसि गृह्णासीत्यर्थः। तर्णकान् शिशुविशेषान्। 'सद्योजातस्तु तर्णकः' इत्यमरः। पोषाय रक्षणार्थं, तेषु भक्तेषु सौहृदं प्रेमातिशयविशेषं पुष्णासि पूरयसीत्यर्थः[3]।

इन्द्रवंशाख्यं वृत्तमिदम्। तथा च पैङ्गलसूत्रम्। इन्द्रवंशा तौ ज्रौ। प्रतिपादं तगणद्वयं जगणो रगणश्चेत्येतद् वृत्तमिन्द्रवंशाख्यं भवतीत्यर्थः।
॥ २३ ॥

भवः शर्वस्त्रिलोकेशः शितिकण्ठः शिवाप्रियः।
उग्रः कपाली कामारिरन्धकासुरसूदनः॥

एतानि नव नामानि निर्वक्ति सत्तेत्यादिना —

**(ओम् भवाय नमः)**

**सत्तामात्रमधिष्ठानमुपादानमसि विश्वस्य।**
**सलिलस्याधिष्ठात्री मूर्तिस्तव तेन विश्रुतोऽसि भवः॥२४॥**

भूधातोः सत्तार्थकात् कर्तरि पचाद्यचि[4] भवत्यस्तीति भवः। सत्तामात्रस्वरूप इत्यर्थः। अस्तेरेव इदं रूपम्। उस्त्यस्मिन् विश्वम् इत्यधि-

---

[1] इति तथा (ख,ग) [2] अयं भागः नास्ति (ख,ग) [3] पूरयदित्यर्थः (ख)
[4] पचाद्यच् (ख)

करणे, अस्त्यस्माद्विश्वम्[1] इत्यापादाने वा[2] ऋदोरप् इत्यप्प्रत्यये 'अस्तेर्भूः' इति भ्वादेशे च भव इति रूपसिद्धिरिति अभिप्रेत्याह—**अधिष्ठानमुपादानमसीति** ।

[3]चराचरात्मकाखिलप्रपञ्चजातस्या[3]धिष्ठानं आश्रयः, उपादानं प्रवृत्तिप्रयोजकं वेत्यर्थः ।

"यतो वा इमानि भूतानि जायन्ते, येन जातानि
जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति" इति ।

"यो योनिमधितिष्ठत्येको यस्मिन्निदं सं च
विचैति विश्वम्" इत्यादिश्रुतेः ।

अथ वा अष्टमूर्तिसमष्ट्यात्मकपरमशिवाभिन्ना [4]सलिलाधिष्ठात्री [5]मूर्तिरेव वा भव इत्युच्यते ।

तदुक्तं लैङ्गे —

अष्टमूर्तिर्जगद् व्याप्य[6] स्थितोऽयं परमेश्वरः ।
चराचराणां भूतानां धाता विश्वम्भरात्मकः ॥
भव इत्युच्यते देवैर्भगवान् वेदवादिभिः । इति ।

तथा चैकात्मिका नानात्मिका वा मूर्तिरेव भवपदप्रतिपाद्ये[7]त्यभिप्रायेणाह—**सलिलस्येति** । तव मूर्तिरित्यत्र 'राहोः शिरः' इतिवदभेदार्थकषष्ठ्या त्वदभिन्नाष्टमूर्ति[8]समष्ट्यात्मिका मूर्ति[8]र्भवपदप्रतिपाद्येत्यर्थः । इदमुपलक्षणम् । भवन्ति आविर्भवन्ति अन्योन्यमस्मात् ब्रह्मादय इति भवः[9] ।

---

[1] विश्व (क) [2] अपादानमिति वा (ग) [3] चराचरस्य अखिलप्रपञ्चस्य जातस्य (ग)
[4] सलिलस्याधिष्ठात्री (ग) [5] मूर्तिरिति (ग)
[6] व्यापी (ख) [7] अयं भागः नास्ति (ग) [8] अयं नास्ति (ख) [9] भावः (ख,ग)

परस्परं ब्रह्मविष्णुरुद्राणामुत्पादकः इत्यर्थः । तथा चोक्तं **शिवपुराणे** वायुसंहितायाम् —

त्रयस्ते कारणात्मानो जाताः साक्षान्महेश्वरात् । इत्युपक्रम्य,

तपसा तोषयित्वा तं पितरं परमेश्वरम् ।
ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् ॥

कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयौ ।
विष्णुश्च भगवांस्तत्र ब्रह्माणमसृजत्पुनः ॥

नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः ।
एवं कल्पेषु कल्पेषु[1] ब्रह्मविष्णुमहेश्वराः ॥

परस्परस्माज्जायन्ते परस्परजयैषिणः ॥ इत्यपि द्रष्टव्यम् ।

इदं च श्रुतिप्रसिद्धं नाम । "नमो भवाय च रुद्राय च" इति । उद्गीत्याख्यं[2] वृत्तमिदम्—उत्क्रमेणोद्गीतिः । आर्याधद्वयलक्षणयोः पूर्वोत्तर-वैपरीत्येन उद्गीतिसंज्ञकवृत्तं भवतीत्यर्थः । ॥ २४ ॥

## (ओम् शर्वाय नमः)

गृणाति हिनस्त्यन्तकाले सर्वमिति शर्वः । गृशृभ्यां वः इत्यौणादिको वप्रत्ययः इत्यभिप्रायेणाह—**यदेतदित्यादि** ।

**यदेतदाभाति बहुप्रकारं**
**जगत्तदन्ते सकलं शृणासि ।**
**अधिष्ठितो मध्यमदेशलिङ्गे**
**धरण्यधिष्ठातृतयापि शर्वः ॥ २५ ॥**

---

[1] नास्ति (ग) [2] उद्गीताख्यम् [3] तदेतत् (ग)

यदेतत्परिदृश्यमानं वियदादिविविधविषयात्मकं जगत् तदन्ते प्रपञ्चोपसंहारकमहाप्रलयावसरे शृणासि उपसंहरसीत्यर्थः ।

मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद् ब्रह्मास्म्यहमव्ययम्[1] ॥ इति श्रुतेः ।

मध्यमदेश इति क्षेत्रविशेषः । तत्रत्यलिङ्गे शर्वेश्वर[2] इति प्रसिद्ध इत्यर्थः । धरणीत्यादि । पृथिव्यभिमानिनी वा मूर्तिः शर्वपदार्थ इत्यर्थः । परमशिवाभिन्नाष्टमूर्तीनामन्तः शर्वमूर्तेः पृथिव्यधिष्ठातृतायाः अन्यत्र प्रपञ्चितत्वात् । तदुक्तं **शिवपुराणे** "उर्वी शर्वात्मिका मूर्तिः इति शास्त्रस्य निश्चयः"[3] इति ।

इदं च श्रुतिप्रसिद्धं नाम । "नमः शर्वाय च पशुपतये च" इति । उपेन्द्रवज्राख्यं वृत्तमिदम् । तथा च पैङ्गलं सूत्रम् । 'उपेन्द्रवज्रा ज्तौ ज्गौग्' । प्रतिपादं जगणः, 'जगणः[4] गुरुद्वयं च इत्येतद्वृत्तमुपेन्द्रवज्राख्यं भवतीत्यर्थः । ॥ २५ ॥

## (ओम् त्रिलोकीशाय नमः)

त्रयाणां लोकानां समाहारस्त्रिलोकी । तस्याः ईशः[5] त्रिलोकीशः । तन्नियामकः, तत्साक्षी वा इत्याशयेनाह—**उर्ध्वाध** इति ।

**ऊर्ध्वाधोमध्यभुवाम्**
**अमरासुरमानवप्रकरनिविडानाम् ।**
**अन्तर्यमनाद् त्रिपुटी-**
**साक्षितया शङ्कर त्रिलोकीशस्त्वम् ॥ २६ ॥**

---

[1] तद्ब्रह्माद्वयमस्म्यहम् (ख,ग) [2] सर्वेश्वर (ख) [3] निश्चयम् (ग) [4] नास्ति (ग)
[5] ईश्वरः (ग)

अत्र च भूशब्दो भुवनपरः। ऊर्ध्वं चाधश्च मध्यश्च तद्रूपाणि भुवनानि तेषाम्। अमराश्च असुराश्च मानवाश्च तेषां प्रकरः समूहः तेन निबिडितानि सन्दष्टानि[1] यानि ऊर्ध्वाधोमध्यभुवनानि स्वर्गपाताल-मर्त्याख्याः लोकाः, तेषामन्तर्यमनात् अन्तर्यामितया तत्तत्कार्येषु प्रेरणा-दित्यर्थः। एवं चात्र यावद्विषयेष्वपि चराचरात्मकेषु प्रत्येयबुद्धिवैचित्र्य-द्वारा सर्वानपि लोकान् स्वस्वकार्ये प्रवर्तयति इत्युक्त्या[2] सर्वान्तर्यामित्वलक्षणं त्रिलोकीशत्वमुक्तं भवति। तथा च श्रुतिः —

"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।"

य एको जालवानीशत [3]ईशानीभिः सर्वान् लोकान् ईशत[3] ईशानीभिः। एको हि रुद्रो न द्वितीयाय तस्थुः य इमां लोकान् ईशत[3] ईशानीभिः प्रत्यङ्जनाः संचुकोचान्तकाले संसृज्य विश्वा भुवनानि गोप्ता॥ इति।

अथवा "साक्षी चेता केवलो निर्गुणश्च" इति श्रुतिप्रसिद्धं सर्वलोक-साक्षित्वमेव त्रिलोकीशत्वमित्याह—**त्रिपुटीसाक्षितया** इति। पुट[4]शब्दो विषयपरः। त्रयाणां पुटानां समाहारस्त्रिपुटी। स्वर्गमर्त्य[5]पातालात्मक-विविधप्रपञ्चाकारवृत्तिविशेष[6]विषयस्तत्साक्षितया[6] वा त्रिलोकीश इत्यर्थः। मूले च लोकपदं प्रथमव्याख्याने भुवनपरं, "लोकस्तु भुवने जने" इत्यमरः। द्वितीयव्याख्याने च लोक्यत इति लोकः इति कर्मव्युत्पत्त्या विषयपरमिति।

त्रिलोकेश इति पाठे त्रिषु लोकेषु ईशः ईशनं यस्येति वा त्रयो लोकाः यस्मिन् स्वकर्मकत्वादिसम्बन्धेन, तादृशमीशनं[7] यस्येति वा व्याख्येयम्। त्रयो लोकास्त्रिलोकाः, तदीश इति वा। त्रित्वसंहिताः ये लोकाः, तदीश

---

[1] संदटितानि (ग), दष्टानि (ख) [2] इत्युक्त (ग) [3] ईशिनीभिः (ग), ईशनीभिः (ख) [4] शब्दोऽपि(ख) [5] मृत्यु (ख,ग) [6] विषयसाक्षितया (ख,ग)

इति वा व्याख्याने लक्षणमात्राधिक्येऽपि उभयोरपि कर्मधारयत्वाविशेषात् "दिक्संख्ये संज्ञायाम्" इतिनियमविरोध इत्यवगन्तव्यम्। आर्यागीत्याख्यं[1] वृत्तमिदम्। तथा च पैङ्गलसूत्रम्—अर्धे वसुगण आर्यागीतिः। स्वरा अर्धं चार्यार्धमित्यादिसूत्रैर्लक्षितायाः आर्यायाः अन्यतरस्मिन् उभयस्मिन् वा अर्धे वसुगणाः अष्टौ मात्रागणाः यत्र सन्ति, तदार्यागीतिसंज्ञकं वृत्तं भवतीत्यर्थः। प्रकृते च अर्धद्वयेऽपि अष्टौ मात्रागणा[2] इति द्रष्टव्यम्। चतुर्मात्रात्मको मात्रागणः[2]। लघुरेकमात्रो गुरुर्द्विमात्र[3] इत्यादिकमाकरे द्रष्टव्यम्।

(ओम् शितिकण्ठाय नमः)

[4]शितिः नीलं कण्ठे यस्येति शितिकण्ठः।[4] अत्र च हालाहलप्रयुक्तकालिम्नः श्रीकण्ठपदेनैव प्रदर्शितत्वात् प्रकारान्तरेण तत्प्राप्तिपरतया शितिकण्ठपदं व्याचष्टे —

**दधदधिगलमिन्द्रपविप्रहृतिप्रभवं कालम्।**
**कालञ्जरगिरिशिखरे[5] प्रथितस्त्वं शितिकण्ठः॥ २७॥**

**दधदधिगलमित्यादि। इन्द्रपवीति।** इन्द्रस्य देवेन्द्रस्य[6] यः पविः वज्रायुधं, तत्प्रयुक्ता प्रहृतिः प्रहारः, तज्जन्यो यः कालः नीलरूपं[7] तस्य गलमध्ये विधारणात् शितिकण्ठपदप्रति[8]पाद्यो भवसीत्यर्थः[8]। तथा चोक्तं **हरिवंशे** पारिजातापहरणे **कृष्णकृतविल्वोदकेश्वरस्तवे** —

दत्तः प्रहारः[9] कुलिशेन पूर्वं तवेशानाम[10]रराज्ञातिवीर्यैः
कण्ठे नैल्यं [11]तेन ते यत्प्रवृत्तं तस्मात्ख्यातस्त्वं नीलकण्ठोऽतिकायः॥

---

[1] आर्यागीताख्यं (ग) [2] अयं भागो नास्ति (ग) [3] द्विमात्रादिकम् (ग) [4] इदं नास्ति(क) [5] शेखरे(ख) [6] नास्ति(ग) [7]नीलं रूपं (ग) [8] पाद्योऽसीत्यर्थः (ग) [9] दत्तप्रहारः (ख,ग) [10] तवेशानानापराज्ञा (ग) [11] ते गते (ग)

इति । कालञ्जरगिरिरिति क्षेत्रविशेषः । स्पष्टमन्यत् । अर्धाङ्गीसंज्ञकं मात्रा-वृत्तमिदम् । तथा चोक्तमभियुक्तैरभिनवकृत्तरत्नाकरे[1] तुरगैस्त्रिभिरर्धाङ्गीति । तुरङ्गशब्दो हि चतुष्कलात्मकगणपरः । "गजरथपदातितुरगं चतुष्कलानां भवेन्नाम" इति तत्रैव विशदं परिभाषितत्वात् । तथा च प्रतिपादं चतु-र्मात्रात्मकगणत्रयं यत्र तदर्धाङ्गीसंज्ञकं वृत्तं भवतीत्यर्थः ।

(ओम् शिवप्रियाय नमः)

**रतिर्धृतिः कृतिर्बलं शरीरमिन्द्रियं मनः ।**
**समस्तमेव ते शिवा भवानतः शिवाप्रियः ॥ २८ ॥**

शिवा चिच्छक्तिः प्रिया स्वात्माभिन्नत्वेन परमप्रेमास्पदीभूता यस्येति शिवाप्रियः [2]समस्तमेवेत्यनेनोक्तानुक्तात्मकः सर्वोऽपि प्रपञ्चः परमशिवाभिन्न-पराशक्तिस्वरूप एवेत्युक्तं भवति[2] । तथा चोक्तमभियुक्तैः —

शक्तिः[3] शरीरमधिदैवतमन्तरात्मा
ज्ञानं क्रिया करणमासनजालमिच्छा[3] ।
ऐश्वर्यमावरणमायतनानि च त्वं
[4]किं तन्न यद् भवसि देवि शशाङ्कमौलेः ॥

तथा —

शम्भोर्ज्ञानक्रियेच्छाबलहरणमनःशान्तितेजःशरीर-
स्वर्लोकागारदिव्यासनवरमहिषीभोग्यवर्गस्वरूपा ।
सर्वैरेतैरुपेता स्वयमपि च परब्रह्मणस्तस्य शक्तिः
सर्वाश्चर्यैकभूमिः मुनिभिरभिनुता वेदतन्त्राभियुक्तैः ॥

---

[1] अभिनवरत्नाकरे (ग) [2] अयं भागो नास्ति (ग) [3] एतौ भागौ त्रुटितौ (क)
[4] किं किं न तद् (ग)

इति। शेषमतिरोहितार्थम्। प्रमाणिकासंज्ञकं वृत्तमिदम्। तथा च पैङ्गलसूत्रम्[1]—प्रमाणिका जरौ लगौ। प्रतिपादं जगणः रगणः लघुर्गुरुश्च इत्येतद्वृत्तं प्रमाणिकासंज्ञकं[2] भवतीत्यर्थः।

## ( ओम् उग्राय नमः )

उच समवाय इति धातोः उच्यति सर्वलोकान्तःसमवेतो भवतीति वा, उत्पूर्वकात् गच्छतेः उद्गच्छति[3] सर्वस्मादपि लोकादूर्ध्वं वर्तते विश्वोत्तीर्णो भवतीति वा उग्रः इत्यभिप्रायेणाह —

**उच्यस्यन्तर्निखिलजनानामुद्गच्छस्यप्यथ जगदूर्ध्वम्।**
**प्रव्यक्तः सन् कनखललिङ्गे वायोरन्तर्वससि तदुग्रः ॥ २९ ॥**

उच्यसीत्यादि। निखिलजनानामखिललोकानाम्, उच्यसि समवेतोऽसि। सर्वलोकान्तर्व्यापक इत्यर्थः। उद्गच्छसि[4] ऊर्ध्वं व्याप्नोषि[5]। अत एव कनखलाख्ये क्षेत्रविशेषे उग्रेश्वरत्वेन प्रव्यक्तोऽसि। व्यष्टिसमष्ट्यात्मकप्रपञ्चमात्रव्यापनेन स्थूलभाव[6]प्राप्तेः। अथ वा वाय्वधिष्ठातृमूर्तिविशेषो वा उग्र इत्याह—वायोरन्तरिति। तदुक्तं[7] **शिवपुराणे** —

स्पन्दयन् पवनो विश्वं बिभर्ति स्पन्दते च यत्।
उग्र इत्युच्यते सद्भिर्मूर्ती रुद्रस्य वेधसः ॥ इति।

श्रुतिप्रसिद्धं चेदं नाम। "नम उग्राय च भीमाय च" इति। मत्ताख्यं वृत्तमिदम्। तथा च पैङ्गलसूत्रम्—मत्ता म्भौ स्गौ। प्रतिपादं मगणः भगणः सगणः गुरुश्च इत्येतद्वृत्तं मत्ताख्यं भवतीत्यर्थः।

---

[1] पैङ्गलानां वचनम् (ख,ग) [2] प्रमाणिकाख्यं (ग) [3] उद्गति (ख,ग)
[4] उद्गसि (ख) [5] प्राप्नोषि (ग) [6] व्याप्तेः (ख,ग) [7] नास्ति (ग)

(ओम् कपालिने नमः)

कमलभवकरोटिव्रातमालाधरत्वात्
तदधिकबलशाली भासि कङ्कालनाथः ।
परशिव[1] करवीरक्षेत्र[2]मध्यस्थलिङ्गे
निवससि सुरवन्द्यो नामतस्त्वं कपाली ॥ ३० ॥

कपालमस्य अस्तीति कपाली । **कमलभवेत्यादि** । कमलभवस्य अब्जयोनेर्ब्रह्मणः करोटिव्रातः कपालसमूहस्तत्कृता या माला तां धारयतीति तथा । कपालव्यूहमालाधर इत्यनेन अनेक[3]ब्रह्मान्तदर्शित्वलक्षणं सदातनत्वं सूचितम् । तच्च समबलत्वविषमबलत्वाभ्यां बाधितं सत् तदधिकबलत्वे[4] पर्यवस्यतीत्याह तदधिकेति । तदपेक्षया कमलभवापेक्षया अधिकं बलमस्यास्तीति तथा । तथा चोक्तमन्यत्र **अभियुक्तैः** —

कल्पान्तरे द्रुहिणकोटिकरोटिमाला-
भस्माङ्गराग[5]कमठाङ्गवराहशृङ्गैः ।
आकल्प एव तव मङ्गलविग्रहस्य
लोकोत्तरं किमु बलं शिव न व्यनक्ति[6] ॥ इति ।

कङ्कालनाथ इति पञ्चविंशतिमूर्त्यन्तर्गतो मूर्तिविशेषः । तदुक्तं **वातुलशुद्धे** —

"कङ्कालं षोडशं भवेत्" इति ।

करवीरक्षेत्र[7] इति । करवीराख्ये क्षेत्रविशेषे कपालीश्वर इति नाम्ना निवससीत्यर्थः । तथा च तादृशक्षेत्रे निवसन् योगेन कपालमालाधारणात्

---

[1] परमशिव (ख) [2] मध्यस्थ (क) [3] ब्रह्माण्ड (ख,ग)
[4] पर्यवस्यतीत्यत आह (ख,ग) [5] कमलांग [6] व्यक्ति (ख) [7] नास्ति (ग)

रूढ्या मूर्ति विशेषात्मकत्वाद्वेति उभयथापि कपालीति भासि प्रसिद्धो भवसीत्यर्थः । मालिन्याख्यं वृत्तमिदम् । तथा च पैङ्गलसूत्रम्—“मालिनी नौ म्यौ च” इति । प्रतिपादं नगणद्वयं मगणः यगणद्वयं चेत्येतद्वृत्तं मालिन्याख्यं भवतीत्यर्थः ।

## ( ओम् कामारये नमः )

कामः कामना[1] सैव अरिः शत्रुर्यस्य, यदाप्तौ[2] कामना विरोधिनी स कामारिरिति आशयेनाह —

> **कर्पूरश्वेत त्वं कामेच्छोर्दूरे निष्कामानामासन्नः ।**
> **दर्पं कन्दर्पस्य प्रक्षिण्वन् विख्यातोऽभूर्लोके कामारिः ॥ ३१ ॥**

**कामेच्छोर्दूर** इत्यादि । कर्पूरश्वेत इति सम्बुद्धिः । कर्पूरवत् पाण्डुः इत्यर्थः । कामः काम्यमानपदार्थसमूहः । तमिच्छतीति कामेच्छुः सकामः । कामनैकबद्धचित्त इति यावत् । तस्य दूरे विदूरवर्ती । तथा च कामनारूपप्रतिबन्धग्रहग्रस्तत्वान्न कथञ्चिद् अपि परमशिवभावैक्यं प्राप्तुं[3] शक्नोतीत्यर्थः । एतेन यदवाप्तौ कामना विरोधिनी स कामारिः इति पदव्युत्पत्तिः सूचिता ।

तामेव पुनर्व्यतिरेकमुखेनापि द्रढयति **निष्कामाना**मिति । निर्गता कामना येभ्यः । फलविषयकप्रत्याशाशून्यानामित्यर्थः । आसन्नः सन् । निकटवर्तीति यावत् । कामनारूपप्रतिबन्धकविरहात् निसर्गत एव परम[4]शिवभावं प्राप्नोतीत्यर्थः । तथा चोक्तं **शिवपुराणे** –

> फलोद्देशेन देवेशि लघुर्मयि समाश्रयः ।
> फलार्थी तदभावे मां परित्यक्तुं क्षमो यतः ॥ इति ।

---

[1] असौ (ख,ग) [2] यदवाप्तौ (ख,ग) [3] प्राप्नोति [4] परं परम (ख,ग)

तथा शिवगीतायामपि —

त्यक्त्वा पुत्रादिषु स्नेहं निष्कामो निष्परिग्रहः ।
यावज्जीवं विरक्तस्सन् लिङ्ग एवार्चयेच्छिवम् ॥
एकेन जन्मना तस्य ददाम्यन्ते[1] परं पदम् । इति ।

तथा लैङ्गेऽपि —

महादेवपरा नित्यं चरन्तो ह्यूर्ध्वरेतसः ।
अर्चयन्ति महादेवं वाङ्मनःकायसंयताः ॥
रुद्रलोकमनुप्राप्य न निवर्तन्ति ते पुनः ।
तस्मादेतद्धृतं दिव्यमव्यक्तं व्यक्तलिङ्गिनः ॥ इति ।

शिवधर्मेऽप्यष्टविधभक्तिनिरूपणावसरे —

मद्भक्तजनवात्सल्यं[2] पूजायाश्चानुमोदनम् ।
स्वयमभ्यर्चनं भक्त्या मदर्थे चाङ्गचेष्टनम् ॥
मत्कथाश्रवणे सक्तिः स्वरनेत्राङ्गविक्रिया ।
ममानुस्मरणं नित्यं यच्च मां नोपजीवति ॥ इति ।

तथान्यत्रापि —

योगी वाप्यथवाऽयोगी विरक्तः कामुकोऽथवा ।
लिङ्गमेवार्चयेन्नित्यं मम नामानि वा स्मरेत् ॥ इति ।

तथा गीतायामपि —

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ इति ।

---

[1] परिग्रहम् (ख,ग) [2] मत्पूजाश्च ........ [3] शिवगीतायामपि (ख)

अथ वा कामस्य मन्मथस्य अरिः कामारिः कामदाहक[1] इत्याशयेनाह—**दर्पं कन्दर्पस्येति**। कन्दर्पस्य मन्मथस्य दर्पं सर्वलोकसंमोहकत्वादि-प्रयुक्तं गर्वं प्रक्षिण्वन् प्रकर्षेण नाशयन् लोके जगति। अभूरितिच्छेदः। विख्यातोऽभूः। उपदर्शितार्थप्रतिपादकत्वात् कामारिरिति प्रसिद्धिमान् जातोऽसीत्यर्थः।

कर्पूराख्यं वृत्तमिदम्। तथा च पैङ्गला आहुः[2] "मा रामा यस्मिन् तत्कर्पूरम्"। रामशब्दस्त्रित्वपरः। तथा च प्रतिपादं मगणत्रयं यत्र तत् कर्पूराख्यं वृत्तं भवतीत्यर्थः।

**(ओम् अन्धकासुरसूदनाय नमः)**

**लीलया जगदम्बया पिहितेषु ते नयनेष्वभू-**
**दन्धकारत एव यः स तु भैरवेण निषूदितः।**
**तादृशः कृपया त्वया गाणपत्यमवापितः**
**प्रेमवानपि नामतः पुनरन्धकासुरसूदनः॥ ३२॥**

अन्धकश्चासावसुरश्च, तं सूदयति नाशयति इत्यन्धकासुरसूदनः। तथा च कदाचित् पराशक्त्या स्वलीलालालसैकमानसेन परमशिवनयनारविन्देषु पिहितेषु[3] सत्सु अग्न्यर्कसोमादिरूपतेजःप्रकाशसामान्यविरहात् सर्वत एव जगत्तमोऽभिभूतमासीत्। तत एव कश्चिदन्धकासुर इति अन्वर्थनामा प्रकटोऽभूत्। स च देव्या पुत्रत्वेन परिगृहीतोऽपि[4] तमोगुणप्रधानत्वात् त्रैलोक्यान्तर्वर्त्यशेषजीवराशीन् प्रबाधितुमेव मनो दधौ। ततश्च भगवान् परमेश्वरावताराग्रगण्यो भैरवः परमदारुणमसुराकृतिं निगृह्य शूलाग्रे[5]प्रोत ललाट-

---

[1] इत्यर्थाशयेनाह (ग) इत्यर्थं इत्याशयेनाह (ख) [2] तथाहुः पैङ्गलाः (ग)
[3] अपिहितेषु (ख,ग) [4] परिग्रहेऽपि (ग) [5] प्रोतः (क)

टाग्निना चिरं तापित[1]वान् । तेन स कृतप्रायश्चित्तोऽभूदित्यमृतदृष्ट्यवलोक-नेनालोक्य[2]पुनरम्बया पुत्रत्वेन[3] परिगृहीतः [4]इति धिया दयार्द्रचित्तेन शिवेन[4] सर्वोत्कृष्टे गाणपत्ये[5] स्थापित इत्येवमाख्यायिका **वाराहपुराणे** प्रसिद्धा । तामेवाख्यायिकां दर्शयति—**लीलयेत्यादि** । अन्धकारत एवेत्येवकारेण नयनापिधानादन्धकारः, ततश्चान्धक इति असुर उत्पन्नः, न तु साक्षात् पराशक्तिसंभूतः इत्ययमर्थः सूचितः । सोऽपि अन्धकासुरोऽपि निषूदितः नाशितः[6] शिक्षितः इति यावत् । अवापितः प्रापितः । **नामत** इति । प्रेमातिशयविशेषवत्त्वात् अन्धकासुरसूदनः इत्येतन्नाममात्रं, न त्वं पुन-स्तत्क्षोभकरः इत्यर्थः । विबुधप्रियाख्यं वृत्तमिदम् । [7]तथा च पैङ्गला आहुः[7]-रात्सजौ जभरागजै[8]र्दशभिर्यतिर्विबुधप्रिया । प्रतिपादं रगणः सगणः जगणद्वयं भगणो रगणश्च । अष्टभिः[8] दशभिश्च यतिरित्येतद्वृत्तं विबुध-प्रियाख्यं भवतीत्यर्थः ।

गङ्गाधरो ललाटाक्षः कालकालः कृपानिधिः ।
भीमः परशुहस्तश्च मृगपाणिर्जटाधरः ॥

एतान्यष्टौ नामानि निर्वक्ति—अमरेत्यादिभिः ।

**(ओम् गङ्गाधराय नमः)**

**अमरतटिनी निजं बलमवेक्ष्य गर्वाद्भव-**
**च्छिरसि गगनादपीपतदतीव वेगोद्धुरा ।**
**पटुतरजटाटवीमुपगता न दृष्टा क्वचित्**
**परमशिव तां दधन्निगदितोऽसि गङ्गाधरः ॥ ३२ ॥**

---

[1] तापितः (क) [2] लोकनेनालोकयत् (क) [3] नास्ति (क) [4] इत्यतिदयार्द्रचित्तः(क)
[5] गणापत्ये (ख,ग) [6] नास्ति (ख,ग) [7] पैङ्गलवचः (ग)
[8] अयं भागः नास्ति (क)

धरतीति धरः, गङ्गायाः धरः गङ्गाधरः इत्याशयेनाह—**अमरतटनी-त्यादि**। अमरतटनी स्वर्णदी कुटिलापरनाम्नी निजं बलमवेक्ष्य स्वीय-पराक्रमातिशयविशेषमालोच्य गर्वात् वस्तुतः परमशिवभावानपायिन्या अपि पराशक्तेः कुतोऽपि ब्रह्मशापात् प्राप्तब्रह्मपरभावजलरूपायाः पुनस्तत्प्राप्तिपूर्वे-केच्छाविहारमहोत्सवानुभवो भावीति स्वस्वरूपानुसन्धानप्रयुक्तपारवश्यात्, अथवा स्वर्ग[1]मर्त्यपातालाख्येषु त्रिष्वपि लोकेषु अतीव वेगादापतन्त्याः मम धारणे के वा शक्ताः स्युः ? न कोऽपि शक्नोति—इति आहङ्कारिकवृत्ति-विशेषाद्वा। **भवच्छिरसीति**। अन्यत्रासामर्थ्यदर्शनादिति भावः। तथा चोक्तमारण्यके **पर्वणि** भगीरथं प्रति गङ्गया[2] —

करिष्यामि महाराज वचस्ते नात्र संशयः।
वेगं तु मम दुर्धर्षं पतन्त्या गगनाच्च्युतम् ॥
न शक्तस्त्रिषु लोकेषु कश्चिद्धारयितुं नृप।
अन्यत्र विबुधश्रेष्ठान्नीलकण्ठान्महेश्वरात् ॥ इति।

अन्यत्रापि—[3]**ब्रह्मतर्कस्तवे** दीक्षितैरप्युक्तम्[3]—

गङ्गा धृता न भवता शिव पावनीति
नास्वादितो मधुर इत्यपि कालकूटः।
संरक्षणाय जगतां करुणातिरेकात्
कर्मद्वयं कलितमेतदनन्यसाध्यम् ॥ इति।

**अतीव वेगोद्धुरेति**। अत्यन्तवेगेन उद्धुरा त्वरितगामिनी। गगनादपीपतत्। व्योम्नः पुनः पुनरापतत्। एवंभूतापि सा परमशिवपटुतर-जटाटवीमनुप्राप्य इच्छाविहारवनवासमहोत्सवाद्यनुभावनेच्छया स्वसामर्थ्याव-

[1] मृत्यु (ग) [2] गङ्गावचः (ग) [3] नास्ति (क)

गुण्ठनप्रयुक्तलज्जया वा क्वचिदपि न दृष्टेत्यर्थः[1]। एवंभूतगङ्गाधारणात् गङ्गाधर इति नाम्ना लोके निगदितो भवसीत्यर्थः । मालाधराख्यवृत्तमिदम् । तथा च पैङ्गलोक्तिः—"नसजसयला गुरुर्यदि तदैष मालाधरः ।" नगणः सगणः जगणः सगणः यगणश्चेति पञ्चगणाः लघुर्गुरुश्च—इत्येतद्वृत्तं मालाधराख्यं भवतीत्यर्थः । ॥ ३३ ॥

## (ओम् ललाटाक्षाय नमः)

उडुशशिरविसंहर्ता प्रलयसमयसप्तार्चिः ।
तमुपरि नयने बिभ्रद् भव भवसि ललाटाक्षः ॥ ३४ ॥

ललाटे अक्षि नयनं यस्येति ललाटाक्षः । उडवो नक्षत्राणि, शशी चन्द्रः, रविर्भानुः, तेषां संहर्ता संहारको यः प्रलयसमयसप्तार्चिः प्रलयकालीनप्रचण्डोद्दण्डवातोपहितानलः, तमुपरिनयनत्वेन स्वीकुर्वन् ललाटाक्ष इति प्रसिद्धो भवसि इत्यर्थः । स्पष्टमवशिष्टम् । भुजगशिशुसृताख्यं वृत्तमिदम् । तथा च पैङ्गलसूत्रम्[2]—"भुजगशिशुसृता नौम् ।" प्रतिपादं नगणद्वयं मगण[3]श्चेति तद् वृत्तं भुजगशिशुसृताख्यं भवतीत्यर्थः । ॥ ३४ ॥

## (ओम् कालकालाय नमः)

कालयति नाशयतीति कालः मृत्युः कालाग्निरुद्रो वा । तस्यापि कालः उपसंहारक इति कालकाल इत्यभिप्रायेणाह मार्कण्डेय[4] इत्यादि ।

मार्कण्डेयः कालमुखाद्विमुक्तो
दग्धो रुद्रः काल इति प्रसिद्धः ।
तुर्यां मूर्तिं बिभ्रदुमादिनाथ
प्रख्यातोऽसि त्वं भुवि कालकालः ॥ ३५ ॥

---

[1] दृष्टेत्यर्थः (ग) [2] पैङ्गलसूक्तिः (क), पैङ्गलानामुक्तिः (ख)
[3] मगणश्च भुजग....(ग) [4] नास्ति (क)

मार्कण्डेयः मृकण्डुतनयः कालमुखात् कालस्य मृत्योर्यन्मुखमास्यं तस्मात् मुक्तः मोचितः। एतेन मृत्यूपसंहारकः इत्याद्या व्युत्पत्तिर्दर्शिता। मार्कण्डेयमृत्युशासनं च लैङ्गे प्रतिपादितम्। यथा—

ततो निशम्य कुपितस्तीक्ष्णदंष्ट्रो भयङ्करः।
करालवदनः कालः पाशहस्तो महाबलः॥

सिंहनादं ततः कृत्वास्फोट्योच्चैश्च मुहुर्मुहुः।
बबन्ध च मुनिं कालः कालप्राप्तं तमाह च॥

मया बद्धोऽसि विप्रर्षे इतो नेतुं यमालयम्।
ब्रूहि वै देवदेवेन तव रुद्रेण किं कृतम्?॥

क्व शर्वस्तव भक्तिः क्व क्व पूजा पूजया फलम्।
क्व चाहं क्व[1] तु मे भीतिःचित्तबद्धोऽसि वै मया॥

लिङ्गेऽस्मिन् संस्थितश्चैव तव रुद्रो महेश्वरः।
निश्चेष्टोऽभून्महादेवः कथं कथय शङ्करः॥

ततस्तदा शिवः स्वयं मुनिं निहन्तुमागतं[2]
निहन्तुमन्तकं मनः स्मराङ्गयज्ञदाहकः।
स्फुरन्बहिर्गतोऽम्बराच्छिवः स्वयं त्रिलोचन-
स्त्रियम्बकत्वचेष्टया च नन्दिना गणेश्वरैः॥ इत्यादि।

कालाग्निरुद्रोपसंहारकत्वाद्वा कालकाल इति द्वितीयां व्युत्पत्तिं दर्शयति —दग्धो रुद्रः सकलजगदुपसंहारकः कालाग्निरुद्र इत्यर्थः। तादृशोऽपि दग्धः नाशित इति वा कालकाल इत्यर्थः।

---

[1] मुने (ग) [2] नास्ति (क)

अथवा परमशिवपञ्चविंशतिमूर्त्यन्तर्गता या अष्टमी मूर्तिस्तां बिभ्रत्, तदात्मकः सन् वा कालकाल इति प्रसिद्धो भवसि इत्याह तुर्यां मूर्तिमिति। तथा चोक्तं वातुलशुद्धे 'कालकालमथाष्टमम्' इति। उमाधिनाथ इति च संबुद्धिः। श्रुतिप्रसिद्धं चेदं नाम। "ज्ञः कालकालो गुणी सर्वविद्यः" इति। गुणाङ्गीसंज्ञकं वृत्तमिदम्। तथा च [1]पैङ्गला आहुः[1]—म्तौ[2] ज्गौ गः स्याद्बिधनैर्गुणाङ्गी। प्रतिपादं मगणः तगणः जगणः[3] गुरुद्वयं च। चतुर्भिः सप्तभिश्च यतिरित्येतद् वृत्तं गुणांगीसंज्ञकं भवतीत्यर्थः। ॥ ३५ ॥

(ओम् कृपानिधये नमः)

दैतेयेषु जलन्धरादिषु<br>
स्वीयानामपकारकेष्वपि।<br>
सालोक्यादिपदानि दित्ससि<br>
त्वं ख्यातोऽसि ततः कृपानिधिः ॥ ३६ ॥

कृपायाः प्राणिमात्रसंतापनिर्हरणेच्छारूपायाः निधिः आश्रयः इति कृपानिधिः। दैतेयेष्वित्यादि। दितिकुलसमुद्भूताः ये जलन्धरप्रभृतयो दैत्येन्द्राः कामं सुरगणोन्मूलनैकबद्धव्रताः, तेष्वपि सालोक्यसामीप्यसायुज्यादि-स्थानानि वितरन् कृपानिधिरिति प्रसिद्धो भवसीत्यर्थः। जलन्धरादीत्यादिना बाणान्धकासुरप्रभृतीनां परिग्रहः। तथा चोक्तं लैङ्गे—

जलन्धर इति ख्यातो जलमण्डलसंभवः[4]।<br>
आसीदन्धकसंकाशः तपसा लब्धविक्रमः ॥<br>
तेन देवास्सगन्धर्वाः सयक्षोरगकिन्नराः।<br>
निर्जिताः समरे सर्वे ब्रह्मा च भगवान् हरिः ॥

इत्यादिकमुक्त्वा—

---

[1] पैंगलं सूत्रम् [2] मतौ (ख,ग) [3] नास्ति (ख) [4] जलमण्डनसंभवः (ख)

दैत्यैरन्यैस्तथान्यैश्च रथनागतुरङ्गमैः ।
सन्नद्धैः सह संनह्य शर्वं [1]जेतुं ययौ बली[1] ॥
भवोऽपि दृष्ट्वा दैत्येन्द्रं मेरुकूटमिव स्थितम् ।
[2]साम्बः सनन्दीशगणः प्रोवाच प्रहसन्निव[2] ॥
किं कृत्यमसुरेशान युद्धेनानेन साम्प्रतम्[3] ।
मद्बाणैर्भिन्नसर्वाङ्गो मर्तुमभ्युदितो वद ॥

इत्यादिना पादाङ्गुष्ठेन लीलयैव महार्णवे पातित इत्यादिकं तत्रैव प्रपञ्चितम् । तथान्यत्र[4]—

कृत्वार्णवाम्भसि च तं भगवान् रथाङ्गं
स्मृत्वा जगत्त्रयचयेन सुरांश्च सर्वान् ।
कामान्तकोऽन्धकपुरत्रययज्ञमूर्ति-
र्लोकत्रयान्तककरः प्रहसंस्तदाह ॥ इति ।

शुद्धविराट्संज्ञकं वृत्तमिदम् । तथा च पैङ्गलसूत्रम्—शुद्धविराण् म्सौ ज्गौ । प्रतिपादं मगणः सगणः जगणः गुरुश्च इत्येतद्वृत्तं शुद्धविराट्संज्ञकं भवतीत्यर्थः । ॥ ३६ ॥

## (ओम् भीमाय नमः)

बिभेत्यस्मात् सर्वमिति भीमः । तदेव दर्शयति —

**भिया वातो वाति [5]ज्वलनदिनकरौ शक्रमृत्युप्रचेतो-**
**मुखा देवास्त्वत्तो भयचकितहृदस्तत्पराः स्वस्वकार्ये ।**
**नभोऽधिष्ठात्री ते तनुरतिविपुला सप्तगोदावरे च**
**प्रतीतस्त्वं लिङ्गे गिरिवरतनयानाथ तेनासि भीमः ॥ ३७ ॥**

---

[1] त्रुटितम् (ग) [2] साम्बः सनन्दी प्रोवाच सगणः प्रहसन्निव (ग)
साम्बः सनन्दी सगणः प्रोवाय प्रहसन्निष (ख)
[3] साम्प्रते (क) [4] नास्ति (क,ख) [5] ज्वलदिनकरौ (ख)

**भियेत्यादि** । वातः वायुः, ज्वलनः वह्निः, दिनकरः सूर्यः, शक्रः इन्द्रः, मृत्युः कालः, प्रचेताः वरुणः, भयचकितहृदः भयेन चकिताः[1] विह्वलीभूताः हृदः हृदयानि येषां तादृशाः तत्पराः आसक्ताः[2] । तथा च वाय्वग्न्य[3]र्केन्द्रमृत्युवरुणप्रभृतयो ये देवगणास्ते सर्वेऽपि परमशिवप्रयुक्तभयाकुलितहृदयाः तत्तन्मर्यादानुल्लङ्घनेन स्वस्वकार्येषु शोषणदहनप्रकाशनरक्षणप्राणि[4]हननाप्यायनरूपेषु निरन्तरमप्यासक्ता भवन्तीत्यर्थः ।

तथा च श्रुतिः[5]—

भीषास्माद् वातः पवते भीषोदेति सूर्यः ।
[6]भीषास्मादिन्द्रश्चाग्निश्च[6] मृत्युर्धावति पञ्चमः ॥ इति ।

तथा—

यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् ।
महद्भयं वज्रमुद्यतं य एनं विदुरमृतास्ते भवन्ति ॥ इति ।

एवं —

निर्देशेन शिवस्यैव भेदैः प्राणादिभिर्निजैः ।
बिभर्ति सर्वभूतानां[7] शरीराणि प्रभञ्जनः ॥
हव्यं वहति देवानां कव्यं कव्याशिनामपि ।
पाकं च कुरुते वह्निः शङ्करस्यैव शासनात् ॥ इति ।

अथवा आकाशाधिष्ठातृमूर्तिविशेषो वा भीमपदवाच्य इत्याह **नभ** इति । परमशिवस्य जगद्व्यापिनी या तनुः, सैव नभोऽधिष्ठात्री मूर्ति रित्यन्वयः ।

---

[1] चकितानि विकलीभूतानि हृदयानि (ग) [2] नास्ति (ख,ग) [3] लुप्तम् (क)
[4] हरणा (ख) [5] नास्ति (ग) [6] भीषास्मादग्निश्चेन्द्रश्च (ग) [7] सर्वभूतानि (ग)

तदुक्तं शिवपुराणे —

सर्वावकाशदा सर्वव्यापिका गगनात्मिका ।

मूर्तिर्भीमस्य भीमाख्या भूतवृन्दस्य भेदिका ॥ इति ।

सर्वेषां [1]प्रवेशनिर्गमावकाशदा भूतवृन्दस्य पृथिव्यादिचतुष्कस्य पञ्चीकरणादिप्रक्रियया स्वानु[1]प्रवेशेन व्यावर्तिकेति तदर्थादिति ।

**सप्तगोदावरमिति** । गोदावरीनदी यत्र सप्तधा भिन्ना स क्षेत्रविशेषः । तत्रत्यलिङ्गे[2] भीमेश्वर इति प्रसिद्धो भवसीत्यर्थः । गिरिवरतनयानाथेति संबुद्धिः । श्रुतिसिद्धं चेदं नाम । "नम उग्राय च भीमाय च" इति । शोभाख्यं वृत्तमिदम् । तदुक्तमभियुक्तैः—रसैरश्वैः शैलैः यमननततगा गश्च शोभा प्रसिद्धा । प्रतिपादं यगणः मगणः नगणद्वयं गुरुद्वयं च । षड्भिः सप्तभिः सप्तभिश्च प्रतिपादं यतिरित्येतद् वृत्तं शोभाख्यं भवतीत्यर्थः । ॥३७॥

**( ओम् परशुहस्ताय नमः )**

**अमोघचरितत्वं व्यनक्ति परशुस्ते ।**

**शिवागमवचोभिस्ततः परशुहस्तः ॥ ३८ ॥**

परशुर्हस्ते यस्येति बहुव्रीहिः । प्रहरणार्थेभ्य इति वार्तिकेन हस्तशब्दस्य परनिपातः । शिवागमवचोभिरमोघचरितत्वं तव परशुर्व्यनक्ति इत्यन्वयः । शैवप्राधान्यप्रतिपादकाः[3] ये आगमाः, तदीयाभिः वाग्भिरनन्यसाधारणाखिललोकरक्षणादिलक्षणमाचरणं व्यनक्ति प्रकटयतीत्यर्थः ।

तथा च — त्रैगुण्यं शूलमेतस्य परशुः सत्यनिष्ठता । इत्याद्याः प्रागुपदर्शिताः, स्मृतयः[4] चानुसंधेयाः इति । कुमारललिताख्यं वृत्तमिदम् । तथा च पैङ्गलसूत्रम्—"कुमारललिता ज्सौग्" । प्रतिपादं जगणः सगणः गुरुश्च इत्येतद् वृत्तं कुमारललिताख्यं भवतीत्यर्थः ।

---

[1] अयं भागः नास्ति (क)　[2] तस्मिन् क्षेत्रे (ग)　[3] शैवप्रतिपादकः(ग)　[4] अन्ये(क)

## *(ओम् मृगपाणये नमः)

**दारुवनस्थैस्त्वाभिचरद्भिः प्रेषित एणो वेदशरीरः ।**
**याचनमुद्रा वा दव हस्ते तत्प्रथितोऽसि त्वं मृगपाणिः ॥ ३९ ॥**

मृगः पाणौ यस्येति तथा । मृगोऽपि[1] हननसाधनत्वात् प्रहरणमेव । मृगशब्दो मृगवत्परो वा । अयं च मृगः न प्राकृतः, किन्तु ऋषिकृताभिचारप्रयुक्तो वेदरूपेण परिणत इत्याह—**दारुवनस्थैरिति** । दारुकावनकृतावासैः परमशिवं प्रत्यभिचरद्भिः अनिष्टमापादयद्भिः चतुर्दशसहस्रसंख्याकैरपि ऋषिभिः प्रयुक्तो योऽयं वेदात्मकशरीरशाली एणः मृगशिशुः, तस्य हस्ते धारणात् मृगपाणिरिति प्रसिद्धो भवसीत्यर्थः । पुरा हि भिक्षाटनव्याजेन सर्वा ऋषिपत्नीः व्यामोहयन्तं सञ्चरन्तं परमशिवं प्रत्यभिचारेणोत्पादिताः ये महागजव्याघ्रादयो दुष्टजन्तवस्ते चाकिञ्चित्कराः । प्रत्युत व्याघ्रचर्माम्बरधरत्वादिरूपनाममात्रोपक्षीणसामर्थ्याः स्वरूपहीनाश्चाभवन्नित्यादिकं प्रतिपादितमन्यत्र ।

तथा चोक्तं **स्कान्दे** —

ततो मृगः समुत्थाय शीघ्रमागच्छदम्बरात् ।
सर्वान् ज्ञानविहीनांस्तान् मृगतुल्यानि च ब्रुवन् ॥
आदाय वामहस्तेन दधारेशश्च निश्चलः । इति ।

तस्य च मृगस्य वेदात्मकत्वमुक्तं **मृत्युञ्जयध्याने** —

"स्वकरकलितमुद्रापाशवेदाक्षमालम्" इति ।

अत्र वेदशब्दो मृगवाची ।

---

*इदं नाम, पद्यं, तद्व्याख्या च न सन्ति (क) । [1] हननसाधनत्वाद् (ग)

"मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम्" इति समानार्थकत्वेन ग्रन्थान्तरेषु प्रतिपादनात्। अथवा मृगो मार्गणं याचनमिति यावत्। मार्गणं मृगया मृगः इति **अमरः**। तदेव हस्ते यस्येति वा तथा। याचनमुद्रेत्यत्र[1] याचनायाः मुद्रात्वोत्कीर्तनात् अशेषस्याप्याश्रितजनस्यानवरत-मभिलषितान् कामानहमेव दास्यामीति संकल्पसूचनादनादिसिद्धभक्तवात्सल्यं सूचयन् आह—**याचनमुद्रा** वेति। स्पष्टमन्यत्। रुक्मवतीसंज्ञकं वृत्त-मिदम्। [2]तथा च पैङ्गलं सूत्रम्[2]। रुक्मवती भ्यौ स्गौ। प्रतिपादं भगणः मगणः सगणः गुरुश्चेत्येतद् वृत्तं रुक्मवतीसंज्ञकं भवतीत्यर्थः ॥३९॥

**(ओम् जटाधराय नमः)**

**द्विविधतनुको दक्षध्वंसे बभूविथ यः पुरा**
**मृगमनुययावेकोऽन्यस्तु स्थितो मखमण्डपे।**
**अखिलसरितः पारावारान् पवित्रतरान् धरान्**
**शिरसि कचतापन्नान्[3] बिभ्राच्छ्रुतोऽसि जटाधरः ॥ ४० ॥**

पुरा हि दक्षाध्वरहरणावसरे पर[4]मशिवप्रकोपाग्निदाहभयात् यज्ञपुरुषो मृगरूपेण पलायितः। अन्ये च सर्वे यथायथमज्ञातपूर्वचर्याः स्थगिताशया-श्चासन्। ततश्च भगवान् स्वयमेव साक्षात् किरातोपयुक्तचापबाणादिना तापसोपयुक्तजटादिना च द्विविधवेषेण द्वे रूपे[5] बभार। तत्रैकेन[6] रूपेण यज्ञात्मकं मृगमनुससार। अपरेण च अध्वरशालां प्रविष्टः[7] अवशिष्टजन-हननोत्सुकमनाः स्थितः। स एव च वीरभद्रः—इत्याख्यायिका **वामनपुराणे** प्रसिद्धा। यथा—

---

[1] याचनमुद्रायाः (ख) [2] पैङ्गलसूत्रोक्तम् (ग) [3] बिभ्रन् श्रुतोसि (ग)
[4] पर (ग) [5] द्वे, रूपेण (क) [6] तत्र केन (क) [7] अध्वरशालाप्रविष्टावशिष्ट (ख,ग)

तमेवानुससारेशश्चापमानम्य वेगवान् ।
शरं पाशुपतं कृत्वा कालरूपो महेश्वरः ॥
अर्धेन यज्ञवाटान्ते[1] जटाधर इति श्रुतः ॥ इत्यादि ।

तामेवाख्यायिकां प्रदर्शयति **द्विविधतनुके**त्यादि । स्पष्टं श्लोकार्धम् । अथवा "केशाः संहतरूपेण सर्पाकारा जटाः स्मृताः", तासां धरो[2] जटाधरः इत्यभिप्रायेणाह—**अखिलसरित** इति । सर्वाश्च महानद्यः सर्वे समुद्राः शैलाश्च कुलाचलप्रभृतयः शिरसि केशपाशतापन्नाः । ता एव जटास्तासां धारणाज्जटाधर इति प्रसिद्धो भवसीत्यर्थः ।

तदुक्तं वाराहपुराणे —

जटास्वरूपेण समस्तसागराः
कुलाचलाः सिन्धुवहाश्च[3] सर्वतः ।
शशी परिज्ञानमिदं तव स्थितं
न देव पश्यन्ति कुदृष्टयो जनाः ॥ इति ।

हरिणीसंज्ञकं वृत्तमिदम् । तथा च पैङ्गलसूत्रम्—"हरिणी न्सौ म्रौ स्लौग्रससमुद्रऋषयः" । प्रतिपादं नगणः लघुर्गुरुश्च । षड्भिः, चतुर्भिः सप्तभिश्च यतिरित्येतद्वृत्तं हरिणीसंज्ञकं भवतीत्यर्थः । ॥ ४० ॥

कैलासवासी कवची कठोरस्त्रिपुरान्तकः ।
वृषाङ्को वृषभारूढो भस्मोद्धूलितविग्रहः ॥

इदं नामसप्तकं[4] निर्वक्ति हरेरित्यादिना ।

---

[1] यज्ञवासन्ते (ख,ग) [2] नास्ति(ख) [3] नद्यः(ग) [4] सर्वात्मकं(क)

( ओम् कैलासवासिने नमः )

हरेर्मूर्ध्नि मेरौ हिमे मन्दराद्रौ
भवत्केलिभूमौ भवत्कर्मगम्याः[1] ।
तदूर्ध्वं परा ज्ञानलभ्यास्ति तासु
स्थितत्वेन जातोऽसि कैलासवासी ॥ ४१ ॥

केलीनां विलासानां समूहः कैलम्[2] । आस्यतेऽस्मिन्नित्यासः कैलासः । तत्र वस्तुं शीलमस्यास्तीति कैलासवासी । तदेव दर्शयति **हरे**-**रित्यादि** । वैकुण्ठाद् ऊर्ध्वदेशे हिमगिरिशिखरे मन्दराद्रौ च । **मेरावि**ति । स्थलचतुष्टयवर्तिनः परमशिवविहारावासविशेषाः[3] परमशिवकर्मैकनिष्ठाभिगम्याः (अ) पुनरावृत्तिशालिनश्चेति तत्तत्पुराणेषु प्रसिद्धाः । तत्र हिमालये वर्तमानः **आरण्यकपर्वणि उत्तररामायणे** च प्रसिद्धः । मेरुमन्दरयोर्वर्तमानः **कूर्म**-**पुराणे** प्रसिद्धः । वैकुण्ठादूर्ध्वदेशे वर्तमानः **स्कान्दे** काशीखण्डे दर्शितः ।

यथा —

उपरिष्टात् क्षितेरष्टौ कोटयः सत्यमीरितम् ।
सत्यादुपरि वैकुण्ठो योजनानां प्रमाणतः ॥
आलोकात् परिसंख्यातः कोटिषोडशसंमितः ।
यत्रास्ते श्रीपतिः साक्षात्सर्वेषामभयप्रदः ॥
ततस्तु षोडशगुणः कैलासोऽस्ति शिवालयः ।
पार्वत्या सहितः शम्भुः गजास्यस्कन्दनन्दिभिः ॥
यत्र तिष्ठति विश्वेशः सकलः सपरिष्कृतः । इति ।

---

[1] भवत्केलिगम्याः (ग) [2] कलैः [3] परमशिवस्य विहारविशेषाः (ख,ग)

**चायवीयेऽपि** —

ज्ञेयं विष्णुपदादूर्ध्वं दिव्यं शिवपुरं महत् ।
भोगसंस्थानमतुलं कर्मयोगरतात्मनाम् ॥
अप्रमेयगुणैः सर्वैः विमानैः सर्वकामिकैः ।
असंख्यैस्तत्पुरं व्याप्तं सर्वप्राण्युपकारकैः ॥ इत्यादिना

सर्वेषां शिवभक्तानां तत्परं परिकीर्तितम् । इत्यन्तेन । हरेर्मूर्ध्नि इत्यत्र हरिशब्दो वैकुण्ठपरः । मूर्धशब्दश्च ऊर्ध्ववाची । वैकुण्ठादूर्ध्वदेश इत्यर्थः । **तदूर्ध्वमिति** । तेषां चतुर्णामप्यूर्ध्वमुपरिदेशे वर्तमाना परा उत्कृष्टा ज्ञानलभ्या परमशिवध्यानादियोगनिष्ठैकगम्या । अत एव पुनरावृत्ति-रहिता च । तथा चोक्तं **शिवधर्मोत्तरे** —

ऊर्ध्वं शिवपुरात्तस्मात् स्थानत्रयमनुत्तमम् ।
नित्यं परमशुद्धं च स्कन्दोमाशङ्करास्पदम् ॥ इति

उपक्रम्य—

सम्प्राप्ताः परमं स्थानं
*ध्यानयोगरताः नराः ।
न तेषां पुनरावृत्तिर्घोरसंसारसागरे ॥
सर्वज्ञाः सर्वदा शुद्धाः परिपूर्णमहेश्वराः ।
शिवतुल्यबलोपेताः परं शिवपुरं गताः ॥ इत्यनेन ।

**तास्वित्यादि** । कैलासानां केलिभूमित्वोक्तेः स्त्रीलिंगत्वेन निर्देशः । तासु पञ्चस्वपि परमशिवविलासभूमिष्वाविर्भूतत्वात् कैलासवासीति प्रसिद्धो भवानित्यर्थः । भुजङ्गप्रयातसंज्ञकं वृत्तमिदम् । तथा च पैङ्गलं[1] सूत्रम्—

---

*....* अयं भागः नास्ति (क) [1] नास्ति (ख)

भुजङ्गप्रयातं यः । जगतीत्यधिकारसूत्रात् प्रतिपादं च चत्वारो यगणाश्चेत् तद् भुजङ्गप्रयातसंज्ञकं वृत्तं भवतीत्यर्थः । ॥ ४१ ॥

कवचवान् कवची । सकललोकसाधारणं कवचस्य प्रयोजनं दर्शयति—

( ओम् कवचिने नमः )

वर्माभावे परशरनयनैः
स्पृश्यो दृश्यो भवति हि सकलः ।
स्वातन्त्र्येण द्वयमपि तिरयन्
दुष्प्रापत्वात्प्रभवसि कवची ॥ ४२ ॥

वर्माभाव इत्यादि । शराश्च नयनानि च शरनयनानि । परेषां शरनयनानि परशरनयनानि । तैः परशरनयनैरित्यर्थः ।

तथा च शरीरसंरक्षकस्य कवचस्य व्यतिरेके परशरैः, परनयनैर्दृश्यश्च भवतीति सर्वेषामपि लोकानां तदावश्यकमेवेति यथाक्रममन्वयः । अप्राकृत-शरीरस्य परमशिवस्य[1] प्राकृतकवचप्रयुक्तप्रयोजनानपेक्षणादन्यादृशमेव तत्कवच-मित्याह— **स्वातन्त्र्येणे**त्यादि । कवचेनेति शेषः । तत्कार्यकारित्वात्स्व-स्यापि कवचत्वोपपत्तिः । तथा च स्वातन्त्र्याभिन्नेन कवचेन दर्शनरूपप्रयो-जनद्वयमपि तिरस्कुर्वन् प्राप्तुमशक्यत्वाच्च कवचीति प्रसिद्धो भवसीत्यर्थः[2] । इदं च श्रुतिप्रसिद्धं नाम । "नमो बिल्मिने च कवचिने च" इति । भ्रमरविलसिताख्यं वृत्तमिदम् । तथा च पैङ्गलसूत्रम्[3] । भ्रमरविलसितं म्भौ न्लौ लोग्च । चशब्दात् समुद्रऋषय [4]इत्यस्यानुषङ्गः । तथा च[4] प्रतिपादं मगणः भगणः नगणः लघुर्गुरुश्च, चतुर्भिः सप्तभिश्च यतिरित्येतद्वृत्तं भ्रमर-विलसिताख्यं[5] भवतीत्यर्थः ।

---

[1] परशिवस्य (ग) [2] भवसीति (ग) [3] सूत्रम् (ख) [4] इत्यनुषङ्गः (ग)
[5] भ्रमरविलसितम् (ग)

कठोरः क्रूरस्वभाव इत्यर्थः । तदेव दर्शयति घोरैकेत्यादिना —

(ओम् कठोराय नमः)

घोरैका ते तनुरन्या शिवेति
द्वे ते बिभ्रज्जगतां रक्षकोऽसि ।
दुष्टा जीवा दमनेनैव रक्ष्याः
पूर्णत्वाद्वा कथितस्त्वं कठोरः ॥ ४३ ॥

घोरात्मकं शिवात्मकं चेति द्वे शरीरे । तत्र घोरात्मकमाग्नेयं रौद्राकारेण, शिवात्मकं च सौम्यं वैष्णवाकारेण, बिभ्राच्चराचरात्मकप्रपञ्चजालस्य संरक्षको भवसीत्यर्थः । तदुक्तं **महाभारते** आनुशासनिकपर्वणि—

वदन्त्युग्रं[1] महादेवं तथा देवं महेश्वरम् ।
एकाक्षं त्र्यम्बकं चैव विश्वरूपं शिवं तथा ॥
द्वे तनू तस्य देवस्य[2] दैवज्ञा ब्राह्मणा विदुः ।
घोरामन्यां शिवामन्यां ते तनू बहुधा पुनः ॥
परा घोरा तनुर्वास्य साग्निविद्युत्समप्रभा ।
शिवा सौम्या[3]श्च ह्यास्य धर्मस्त्वापोऽथ चन्द्रमाः ॥
आत्मनोऽर्धं तु तस्याग्निरुच्यते भरतर्षभ ॥ इति ।

ननु सौम्यशरीरेण विष्णुनैव अखिलजगदवनसंभवे किमाग्नेयात्मकभरणेन रौद्रेण इत्याशङ्क्याह **दुष्टजीवा** इति । क्रूरभावाः ये महागजव्याघ्रादयो दुष्टजन्तवस्ते सर्वेऽपि दण्डनेनैव स्वस्वमर्यादावशवर्तिनः, न तु सामवादादिना ।

---

[1] वदन्त्येकम् (ग) [2] देतेता (ग) [3] तथा हृद्या (ग)

"सान्त्ववादाः[1] प्रकोपस्य जन्तोः क्रौर्यप्रदा मताः[2]" इति न्यायादिति भावः। घोरशरीरभरणं च परमशिवस्य जगद्रक्षणैकप्रयोजनकम् इत्यानुशासनिके व्यक्तमभिहितम्।

यथा पार्वत्युवाच —

भगवन् देवदेवेश[3] त्रिणेत्र वृषभध्वज।
पिङ्गलं विकृतं भाति रूपं ते तु भयानकम्॥
भस्मदिग्धं विरूपाक्षं तीक्ष्णदंष्ट्रं जटाकुलम्।
व्याघ्रोदरत्वक्संवीतं कपिलश्मश्रुसन्ततम्॥
रौद्रं भयानकं घोरं शूलपट्ट[4]ससंयुतम्।
किमर्थमीदृशं रूपं तन्मे शंसितुमर्हसि॥

श्रीमहादेव उवाच[5]—

तदहं कथयिष्यामि शृणु तत्त्वं समाहिता।
द्विविधो लौकिको भावः शीतमुष्णमिति प्रिये॥
तयोर्निग्रथितं सर्वं सौम्याग्नेयमिदं जगत्।
सौम्यत्वं सततं विष्णौ मय्याग्नेयं प्रतिष्ठितम्॥
अनेन वपुषा नित्यं सर्वान् लोकान् बिभर्म्यहम्।
रौद्राकृतिं विरूपाक्षं शूलपट्ट[6]ससंयुतम्।
आग्नेयमिति ते रूपं देवि लोकहिते रतम्॥
यद्यहं विपरीतः स्यामेतत्त्यक्त्वा शुभानने।
तदैव सर्वलोकानां विपरीतं प्रवर्तते॥
तस्मान्मयेदं ध्रियते रूपं लोकहितैषिणा॥ इति।

---

[1] सान्त्ववचनाद्वा (ग) [2] प्रदान्विताः (ग) [3] त्रिनेत्र (ख, ग)
[4] सुसंयुतम् (ख, ग) [5] नास्ति (क, ख) [6] सुसंयुतम् (ख, ग)

अथवा कठोरः पूर्णः । "कठोरः कठिने पूर्णे" इत्यमरात् । कठोरताराधिपलाञ्छनच्छविः[1] इति प्रयोगाच्च । तथा च नित्यतृप्तस्वरूप इत्यभिप्रेत्याह—**पूर्णत्वाद्वा** इति । शेषं स्पष्टार्थम् । वातोर्मीसंज्ञकं वृत्तमिदम् । तथा च पैङ्गलं[2] सूत्रं—"वातोर्मी म्भौ त्गौ ग्च" । प्रतिपादं मगणः भगणः तगणः गुरुद्वयं च इत्येतद्वृत्तं वातोर्मीसंज्ञकं[3] भवतीत्यर्थः ।
॥ ४३ ॥

## ( ओम् त्रिपुरान्तकाय नमः )

त्रीणि पुराणि शरीराणि । "पुरसंज्ञे शरीरेऽस्मिन् शयनात् पुरुषो हरिः इति **विष्णुपुराणवचनात्**, "नवद्वारे पुरे देही" इति **गीतोक्तेश्च** । तेषामन्तको नाशकः इत्यभिप्रेत्याह —

**स्थूलं लिङ्गं[4] करणमिति यत् त्रयं वपुषां नृणां**
**भक्तानां चेत्तदखिलमपि त्वमन्तयसि क्षणात् ।**
**यद्वा नाथ त्रिपुरदहनादलौकिकचर्यया**
**श्रीशैलेऽसि प्रथिततनुमानिति त्रिपुरान्तकः ॥ ४४ ॥**

**स्थूलं लिङ्गमित्यादि** । स्थूलं परिदृश्यमानं भौतिकं शरीरं, लिङ्गं[5] सूक्ष्ममन्तःकरणाद्यात्मकं, कारणमविद्यास्वरूपं च इति यत् शरीराणां त्रयं तत् नृणां परमशिवात् परावृत्तचित्तवृत्तिकानां पामराणामेव, न तु तद्भक्तानामपि । भक्तानां तु स्मृतिमात्रादेव तदखिलमपि शरीरत्रयं युगपदेवान्तयसि नाशयसीत्यर्थः । अथवा त्रीणि यानि पुराणि काञ्चनराजतायसमयानि स्वर्गान्तरिक्षमर्त्यलोकानुचराणि, तारकाक्षकमलाक्षविद्युन्मालिसंज्ञकैर्दैत्यराजैरधिष्ठितानि महादुर्गाणि, तेषामन्तको नाशकः इत्यर्थः[6] ।

---

[1] नास्ति (क) [2] नास्ति (क,ख) [3] ज्ञेयम् (ग) [4] करणमिपि (ख)
[5] नास्ति (क) [6] नास्ति (क,ख)

तथा चोक्तं लैङ्गे —

निहते तारके दैत्ये तारपुत्रे सबान्धवे ।
स्कन्देन चाप्रयत्नेन तस्य पुत्रा महाबलाः ॥
विद्युन्माली तारकाक्षः कमलाक्षश्च वीर्यवान् ।
तपस्तेपुर्महात्मानो महाबलपराक्रमाः ॥

इत्युपक्रम्य —

काञ्चनं दिवि तत्रासीदन्तरिक्षे च राजतम् ।
आयसं चाभवद् भूमौ पुरं तेषां महात्मनाम् ॥
ऐकैकं योजनशतं विस्तारायामतः समम् ।
काञ्चनं तारकाक्षस्य कमलाक्षस्य राजतम् ॥
विद्युन्मालेश्चायसं च त्रिविधं दुर्गमुत्तमम् ।

[1]इत्यादिना विशेषेणेत्यभिप्रायेणाह[1] यद्वेति । अलौकिकचर्ययेति । अलौकिकचर्यापि—

शूलशक्तिगदाहस्तान् दंष्ट्रचापशिलायुधान् ।
नानाप्रहरणोपेतान् नानावेशधरांस्तथा ।
कालाग्निरुद्रसङ्काशान् कालसूर्योपमांस्तदा ॥

इत्यादिना तत्रैव विशदं प्रपञ्चिता[2] । श्रीशैलेति । यद्यपि "श्रीशैले मल्लिकार्जुनः" इत्येव प्रसिद्धिः, तथाप्यष्टषष्टि[3]शिवक्षेत्रपरिगणनावसरे "श्रीशैले त्रिपुरान्तकम्"[4] इत्यभिधानात् तथोक्तम् । [5]इदं च श्रुतिप्रसिद्धं नाम । "महादेवाय त्र्यम्बकाय त्रिपुरान्तकाय" इति ।[5] भाराक्रान्ताख्यं वृत्तमिदम् ।

---

[1] इत्यभिप्रेत्याह (ख, ग) [2] प्रपञ्चितम् (ग) [3] शक्तिः (क)
[4] त्रिपुरान्तकायेति (क) [5] नास्ति (क)

तथाचोक्तमभियुक्तैरभिनववृत्तरत्नाकरे—

"भाराक्रान्ता श्रुतिरसहयैर्मभौ नरसा लगौ"

प्रतिपादं मगणः, भगणः, नगणः, रगणः, सगणः, लघुर्गुरुश्च, षड्भिः, सप्तभिश्चेति सप्तदशसंख्याकैरक्षरैश्च यतिरित्येतद् वृत्तं भाराक्रान्तासंज्ञकं भवतीत्यर्थः । ॥ ४४ ॥

( ओम् वृषाङ्काय नमः )

त्वं गवामनयतः कुपितोऽपि
प्रार्थितोऽसि सुकृतेन वृषेण ।
[1]तेन तद्ध्वजरथो वृषशैले
[2]विश्रुतोऽस्यभिधयापि वृषाङ्कः ॥ ४५ ॥

वृषो धर्मः, स एवाङ्कः लाञ्छनं यस्य स वृषाङ्कः, वृषध्वजो[3] वृषवाहनश्चेत्यर्थः । गवां धेनूनाम् अनयतः । नयो न्यायः स न भवतीत्यनयः, न्यायविरोधी अपराध इति यावत् । तस्मात् कुपितोऽपि क्षुब्धोऽपि[4] सुकृतात्मकेन वृषेण प्रार्थितः सन् आराधितः सन् वृषध्वजो[5] वृषवाहनश्चेति प्रसिद्धो भवसीत्यर्थः । तथा चोक्तं भारते उमामहेश्वरसंवादे ।

पार्वत्युवाच[6]—

भगवन् देव देवेश पिनाकपरमप्रिय ।
वाहनेषु तथान्येषु सत्सु भूतपते तव ॥
अयं तु वृषभः कस्माद्वाहनं स यथाभवत् ।
[7]एवं मे संशयो देव तन्मे शंसितुमर्हसि[7] ॥

---

[1] तेन ध्वजरथो (ख) [2] विश्रुतोऽस्यभियापि (ग) [3] वृषभध्वजो (क)
[4] संक्षुब्धोऽपि (ख,ग) [5] वृषभध्वजो (क) [6] उमोवाच (ग) [7] नास्ति (ग)

महेश्वरः[1] —

[2]तदहं ते प्रवक्ष्यामि वाहनं स यथाभवत् ।[3]
आदिसर्गे पुरा गावः श्वेतवर्णाः शुचिस्मिते ॥

बलसंहननोपेताः दर्पयुक्ताश्चरन्ति ताः ।
अहं तु तप अतिष्ठंस्तस्मिन् काले शुभानने ॥
एकपादश्चोर्ध्वबाहुर्लोकार्थं हिमवद्गिरौ ॥

गावो मे पार्श्वं आगत्य दर्पोत्सिक्ताः समन्ततः ।
स्थानभ्रंशं तदा देवि चक्रिरे बहुशस्तदा ॥

अपकारेण चैतासां मनःक्षोभोऽभवन्मम ।
तस्माद् दग्धा मया[3] गावो रोषाविष्टेन चेतसा ॥

तस्मिंस्तु व्यसने घोरे वर्तमाने पशून् प्रति ।
अनेन वृषभेणाहं शमितः संप्रसादनैः ॥

तदाप्रभृति शान्ताश्च वर्णभेदत्वमागताः ।
श्वेतोऽयं वृषभो देवि सर्वसंस्कारसंयुतः ॥

वाहनत्वे ध्वजत्वे च तदाप्रभृति योजितः ।
तस्मान्मे गोपतित्वं च देवैर्गोभिश्च कल्पितम् ॥ इति ।

वृषस्य च धर्मरूपत्वं **स्कान्दे** प्रतिपादितम्—

तस्माद् धर्मः सदा शम्भोर्वृषरूपेण वाहनम् । इति ।

शैवागमेऽपि —

शुद्धस्फटिकसङ्काशो धर्मरूपो वृषः स्मृतः ॥ इति ।

वृषशैल इति क्षेत्रविशेषः । स्वागताख्यं वृत्तमिदम् । तथा च पैङ्गल-

---

[1] ईश्वर उवाच (ग) [2] अयं भागः नास्ति (ख) [3] यदा (क,ग)

सूत्रं—"स्वागता नौं भ्गौं ग् ।" प्रतिपादं रगणः[1] नगणः भगणः गुरुद्वयं च इत्येतद्वृत्तं स्वागताख्यं भवतीत्यर्थः । ॥ ४५ ॥

## ( ओम् वृषभारूढाय नमः )

वृष सेचन इति धातोः सर्वकामानां वर्षणाद् वृषभः । "ऋषवृषाभ्यां कित्" इत्यौणादिको भच्-प्रत्ययः । तमारूढो वृषभारूढः । द्वितीयेति योगविभागात् समासः । नन्दिवाहन[2] इत्यभिप्रायेणाह —

नन्द्यारोहात् त्रैपुरदाहे हरिणा पृष्ठे
वेदाश्वानां गोवृषरूपैः समुपात्तत्वात् ।
धर्मज्ञानैश्वर्यविरागेषु निरूढत्वा-
द्विख्यातोऽसि त्वं सुरवृन्दे वृषभारूढः ॥ ४६ ॥

नन्द्यारोहादिति । अथवा त्रिपुरदहनोद्यमनप्रस्तावे सकलदेवमयं रथमधिरोहति परमशिवे तद्भाराक्षमतया भुग्नजानुषु [3]वेदात्मकाश्वेषु हरिणा[3] वृषभरूपेण स्वपृष्ठभागे रथस्य धारणादिति परम्परया वा वृषभारूढ इत्यभिप्रेत्याह त्रैपुरदाहेत्यादि । हरिणा विष्णुना वेदाश्वानां[4] वेदात्मकानामश्वानां उपात्तत्वात् धारितत्वात् । तथा च लैङ्गे[5] —

इन्द्रियाणि मनश्चैव भूषणानि समन्ततः ।
श्रद्धा च गतिरस्यैव वेदास्तस्य हयाः स्मृताः ॥

इत्याद्युपक्रम्य —

आरुरोह रथं युक्तं रणमण्डल[6]विभ्रमः ।
सर्वदेवमयो भूत्वा कम्पयन्निव रोदसी ॥

---

[1] नास्ति (क) [2] इत्यभिप्रेत्याह (ग) [3] वेदात्मकेषु हरिषु (ग) [4] वेदानां (ख)
[5] तथा चोक्तं लैङ्गे (ख,ग) [6] मण्डन (क)

ऋषिभिः स्तूयमानश्च वृतश्चाप्सरसां गणैः ।
सुशोभमानो वरदः संप्रेक्ष्यैवं ससारथिम् ।

तस्मिन्नारोहति रथं कल्पितं लोकसंभृतम् ।
शिरोभिः पतिता भूमौ तुरङ्गा वेदरूपिणः ॥

अथाधस्ताद्रथस्यास्य भगवान् धरणीधरः ।
वृषेन्द्ररूपी चोत्थाय स्थापयामास वै रथम् ॥

क्षणान्तरे वृषेन्द्रोऽपि जानुभ्यामगमद्धराम् ।
अभीषुभिश्च[1] भगवान् उद्यम्य च भयाद्विधिः ॥

स्थापयामास देवस्य वचनाद्वै रथं शुभम् ।
ततोऽश्वांश्चोदयामास मनोमारुतरंहसः ॥

पुराण्युद्दिश्य स्वःस्थानि दानवानां तरस्विनाम् ॥ इति ।

अथवा वृषशब्दो धर्मवचनः । भाशब्दश्च ज्ञानपरः । ऐश्वर्यस्य च धर्मसाध्यत्वाद् वैराग्यस्य च ज्ञानसाध्यत्वात् धर्मज्ञानैश्वर्यविरागाश्चत्वरोऽपि वृषभपदप्रतिपाद्याः । तेष्वारूढो वृषभारूढः । तदेकनिष्ठ इत्यर्थ इत्यभिप्रेत्याह—**धर्मज्ञाने**त्यादि । शेषं स्पष्टार्थम् । गोवृषाख्यं वृत्तमिदम् । तथा चोक्तमभियुक्तैः—वेदैर्दिग्भिः मस्तयसा गोवृष उक्तो गौ । प्रतिपादं मगणः तगणः यगणः सगणः गुरुद्वयं च । चतुर्भिः दशभिश्च यतिरित्येतद्वृत्तं गोवृषसंज्ञकं भवतीत्यर्थः । वृत्तनाम्नोऽपि संग्रहान्मुद्राख्योऽलङ्कारः ।
॥ ४६ ॥

## (ओम् भस्मोद्धूलितविग्रहाय नमः)

**स्वाङ्गे[2] भस्म विलिम्पन् नाथ ज्ञानां शिरोव्रतमुपदिशसि ।**
**भूतेशाभिधतीर्थेऽपि त्वं भस्मोद्धूलितविग्रहनामा ॥ ४७ ॥**

---

[1] अभीशुभिश (ख,ग) [2] इदं पद्यं नास्ति (ख)

**स्वाङ्गे**[1] इत्यादि । भस्मना भूत्या उद्धूलितः विग्रहो यस्य स भस्मोद्धूलितविग्रहः । स्वाङ्गे निजशरीरे भस्म भूतिं विलिम्पन् उद्धूलयन् । नाथेति संबुद्धिः । ज्ञानामिति परशिवपरतत्त्वावगमनिदानभूतं यत् शिरोव्रताख्यं कर्म तत् भस्मोद्धूलनमेवेति उपदिशसीत्यर्थः । शिरोव्रतस्य भस्मोद्धूलनात्मकत्वं ब्रह्मविद्याङ्गत्वं च **सौरसंहितायां** मुण्डके[2] च प्रतिपादितम् ।

यथा —

अग्निरित्यादिभिर्मन्त्रैः षड्भिः शुद्धेन भस्मना ।
सर्वाङ्गोद्धूलनं कुर्यात् शिरोव्रतसमाह्वयम् ॥ इति ।

तस्मा एवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् इति च । पापरोगपाशानां त्रयाणां भर्त्सनात् भस्मेत्यर्थः । तत्र पापनाशकत्वं **जाबालश्रुतौ** प्रतिपादितम् —

पापं नाशयते कृत्स्नमपि जन्मशतार्जितम् । इति ।

रोगभर्त्सनं **चानुशासनिके**[3] उमामहेश्वरसंवादे प्रदर्शितम् —

रक्षार्थं मङ्गलार्थं च भस्म दत्तं मया पुरा ।

इति । पाशनिर्हरणं च **ब्रह्मोत्तरखण्डे** प्रसिद्धम् । यथा —

उद्धूलनं त्रिपुण्ड्रं च मायापाशनिवृत्तये ।
आचरन्ति मुनिश्रेष्ठा अथर्वशिरसि स्थितम् ॥ इति ।

तथा **वासिष्ठे लैङ्गे**ऽपि —

भर्त्सनात्सर्वपापानां पाशानां च महामुने ।
भस्मेति कीर्त्यते रक्षा रोगाणां चापि भर्त्सनात् ॥ इति ।

---

[1] नास्ति (ग) [2] मुण्डकोपनिषदि (ग) [3] चाशासनिके (ख), च अनुशासनिके (ग)

भूतेशाभिधतीर्थमिति क्षेत्रविशेषः। शेषं स्पष्टार्थम्। पादाकुलकाख्यं वृत्तमिदम्। तथा च सूत्रम्—एभिः पादाकुलकं षोडशमात्रपादैर्मात्रासमकादिजातिपञ्चकसंबन्धिभिः यैः कैश्चिदनियमेन घटिता जातिः पादाकुलकाख्या भवतीत्यर्थः। ॥ ४७ ॥

(ओम् सामप्रियाय नमः)

[1]सामप्रियः स्वरमयः त्रयीमूर्तिरनीश्वरः।
सर्वज्ञः परमात्मा च सोमसूर्याग्निलोचनः॥

इति सप्त नामानि निर्वक्ति-चन्दनेत्यादिभिः।[1]

**चन्दनस्पर्शशीतामृतस्यन्दिनी**
**सान्त्ववाक् सामवेदोऽथ सामानि वा।**
**तैः प्रयुक्तैरतीवेश संप्रीयसे**
**गीयसे तेन लोकेषु सामप्रियः॥ ४८॥**

चन्दनस्पर्शवत् शीतला चित्ताह्लादकारिणी अमृतस्यन्दिनी सुधावर्षिणी या सान्त्ववाक् सैव सामपदार्थः। तत्र प्रियः सामप्रिय इत्यर्थः। मृदुवाक्प्रियत्वं च परमशिवस्य **शिवधर्मोत्तरे** प्रदर्शितं[2] यथा—

अमृतस्यन्दिनीं वाचं चन्दनस्पर्शशीतलाम्।
सर्वत्रैव प्रयुञ्जानः शिवलोके महीयते॥ इति।

[3]अथवा सामवेद एव सामपदार्थः, तत्र प्रियः सामप्रिय इत्यभिप्रेत्याह—**सामवेद** इति।[3] साम्नश्च सर्वाभ्यर्हितत्वादेव तत्प्रीत्यौचित्यात्।

[1] नास्ति (क) [2] नास्ति (ख) [3] सर्वाभ्यर्हितत्वात्तत्प्री ........ (ख, ग)

तथा च श्रुतिः —

ऋचो ह यो वेद स वेद वेदान्
यजूंषि यो वेद स वेद यज्ञम् ।
सामानि यो वेद स वेद सर्वम् ॥ इति ।

तथा गीतायामपि —

" वेदानां सामवेदोऽस्मि " इति ।

अथवा सामानि गीतिविशेषाः । ' गीतिषु सामाख्या ' इति जैमिनि-सूत्रात् । तत्र प्रियः [1]तथा इत्यभिप्रेत्याह— **अथ सामानि** वेति । सामगानप्रियत्वं च परमशिवस्य प्रसिद्धमेव । तथा चोक्तं **भारते** उप-मन्यूपाख्याने —

ब्रह्मा भवं तदास्तौपीद्रथन्तरमुदीरयन् ।
ज्येष्ठसाम्ना च देवेशं जगौ नारायणः [2]प्रभुः ॥ इति ।

**तैरिति** । यतः सामगानविशेषैः स्तूयमानः सन्नतीव प्रीयसे, अतो लोकेषु सामप्रिय इत्येवं गीयस [3]इत्यर्थः । स्रग्विणी [4]संज्ञकं वृत्तमिदम् । [5]तथा च सूत्रं[5]—स्रग्विणी रः जगत्यधिकारात् प्रतिपादं चत्वारो रगणा-श्चेत्, तद्वृत्तं स्रग्विणीसंज्ञकं भवतीत्यर्थः । ॥ ४८ ॥

**( ओम् स्वरमयाय नमः )**

**षड्जोदात्तमुखाः स्वराः अवयवा वेदैकवपुषः**
**साम्बव्यञ्जनको भवान् स्वरमयी शक्तिस्तव मता ।**
**ओङ्कारावयवेषु मप्रभृतयो रुद्रेश्वरशिवाः**
**सर्वे यस्य विभूतितां विदधते सोऽसि स्वरमयः ॥ ४९ ॥**

---

[1] तथेत्याह (ग) [2] प्रभुम् (ग) [3] नास्ति (ग) [4] नास्ति (ग) [5] नास्ति (ग)

स्वराः सप्तस्वराः गान्धर्वशास्त्रप्रसिद्धाः, उदात्तादयो वा, तन्मय इत्यर्थः। अथवा स्वरशब्दो यावद्वर्णपरः। तन्मयः। अथवा स्वरो नाम अच्। स चात्र विशेषविवक्षया प्रणवरूपः। "यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः परः स महेश्वरः॥" इति प्रयोगदर्शनात्। तन्मयः तत्स्वरूपः। सर्ववेदसारप्रणवात्मक इत्यर्थः। तदेव क्रमेण प्रपञ्चयति—**षड्जेत्यादिना**। षड्जप्रभृतयः [1]उदात्तप्रभृतयश्च ये स्वराः निषादर्षभगान्धारषड्जमध्यमधैवतपञ्चमाः उदात्तानुदात्तस्वरितप्रचयाख्या वा, ते सर्वेऽपि [2]आगमैकशरीरस्य परमशिवस्यावयवविशेषा एव।

"ध्वनीनामपि वर्णानां वेदो मूर्तिरुदीरिता।" इत्यागमवचनेन तेषां वैदैक[3]वपुष्ट्व[3]सम्भवात्। तथा च [4]अवयवावयविनोरभेदात्स्वरमयत्वोपपत्तिरिति भावः। यावद्वर्णात्मकत्वेन स्वरमयत्वं दर्शयति **साम्बेत्यादि**। **व्यञ्जनक** इति। कादयः क्षान्ताः व्यञ्जनानि। तदात्मकः परमशिवः। आदयो विसर्गान्ताः स्वराः, तन्मयी शक्तिः। शिवशक्त्योरभेदाच्च स्वरमय इत्यर्थः।

तदुक्तं शैवतन्त्रे—

अकारादिविसर्गान्ताः स्वराः शक्तिरुदीरिताः।
ककारादिक्षकारान्ताः वर्गाः परशिवः स्मृताः॥ इति।

प्रणवात्मकत्वेन स्वरमयत्वं दर्शयति **ओङ्कारेत्यादि**। अकारोकारमकारनादबिन्द्वाख्याः पञ्चावयवाः प्रणवस्य। तत्र मप्रभृतयो रुद्रेश्वरशिवा इत्यन्तेन [5]अकारोकारप्रतिपाद्ययोः ब्रह्मविष्ण्वोः समुच्चयः। तथा च सृष्टिस्थितिसंहारतिरोधानानुग्रहाख्यपञ्चकृत्यकर्तारो ब्रह्मविष्णुरुद्रेश्वरसदाशिवापर-

[1] नास्ति (ग) [2] आगमैकशरीराः (क) [3] वपुषः (ग) [4] नास्ति (क)
[5] अकारोकारयोः प्रति ....(ग)

नामानः । परमपुरुषास्ते सर्वेऽपि यस्य विभूतितां विदधते, [1]यदीयसामर्थ्यातिशयवशात् स्वस्वकार्यकारणोपयुक्तसामर्थ्यशालिनो भवन्तीत्यतः स्वरमयो भवानित्यर्थः । वाच्यवाचकयोरभेदाध्यवसायात् । [2]प्रणवात्मकत्वोपपत्तिः । तथा चोक्तं वायुसंहितायाम् —

प्रणवो वाचकस्तस्य शिवस्य परमात्मनः ।
शिवरुद्रादिशब्दानां प्रणवो हि परः स्मृतः ॥
तस्मादेकाक्षरं देवमाहुरागमपारगाः ।
वाच्यवाचकयोरैक्यं मन्यमाना मनस्विनः ॥ इति ।

चतुर्मात्रात्मकत्वेनापि प्रणवः प्रतिपादितः तत्रैव यथा —

अस्य मात्राः समाख्याताश्चतस्रो वेदमूर्धनि ।
अकाराश्चाप्युकारश्च मकारो नाद इत्यपि ॥
अकारं बह्वृचं प्राहुः उकारो यजुरुच्यते ।
मकारः साम नादोऽस्य श्रुतिराथर्वणी स्मृता ॥
अकारस्तु महान् बीजं रजःस्रष्टा चतुर्मुखः ।
उकारः प्रकृतिर्योनिः सत्त्वं पालयिता हरिः ॥
मकारः पुरुषो बीजं तमःसंहारको हरः ।
नादः परः पुमानीशो निर्गुणो निष्क्रियः शिवः ॥
एवं तिसृभिरेवैषां मात्राभिर्निखिलक्रियाः ।
अभिधाय शिवात्मानं बोधयत्यधमात्रया ॥ इति ।

शार्दूलललिताख्यं वृत्तमिदम् । तथा चोक्तमभियुक्तैः—छेदो भानुरसैर्मसौ जसतसाः शार्दूलललितम् । प्रतिपादं मगणः सगणः जगणः

---

[1] अन्यदीय (ख, ग) [2] प्रणवत्वोपपत्तिः (ग)

सगणः तगणः सगणश्च । द्वादशभिः षड्भिश्च यतिरित्येतद् वृत्तं शार्दूल-ललिताख्यं भवतीत्यर्थः । ॥ ४९ ॥

ऋग्यजुस्साम्नां त्रयाणां समुदायस्त्रयी । इति वेदास्त्रयस्त्रयी इत्यमरात् । सैव मूर्तिः शरीरं यस्येति त्रयीमूर्तिः । वेदत्रयशरीरक इत्यर्थः । तदेव विभज्य [1]प्रदर्शयति —

( [2]ओम् त्रयीमूर्तये नमः )

साम्ब ऋग्वेदकोऽस्यागलान्तात्
आ च नाभेर्यजुर्वेदरूपः ।
नाभिदेशादधः सामवेदः
तेन तेऽभूत् त्रयीमूर्तिनाम[3] ॥ ५० ॥

साम्बेत्यादि । साम्बेति सम्बुद्धिः । आ गलान्तादिति । कण्ठादि ब्रह्मरन्ध्रान्तं ऋग्वेदस्वरूपः । आ च नाभेरिति । [3]कण्ठादिनाभिपर्यन्तं यजुर्वेदस्वरूपः । नाभिदेशादिति । नाभ्यादिपदपर्यन्तं सामवेदस्वरूपः [4]इत्येवं वेदत्रयात्मकमूर्तिमानित्यर्थः ।

ननु देव्या एव त्रयीमूर्तित्वं कूर्मपुराणे हिमवन्तं प्रति देवीवचन-प्रदर्शितम् । यथा —

[5]ममैवाज्ञापरा मूर्ति वेदसंज्ञा [6]सरस्वती ।
ऋग्यजुःसामरूपेण सर्गादौ संप्रवर्तते ॥ इति ।

तथा शिवपुराणेऽपि —

शब्दजालमशेषं तु[5] धत्ते शर्वस्य वल्लभा ।
अर्थस्वरूपमखिलं धत्ते मुग्धेन्धुशेखरः ॥

---

[1] दर्शयति (ग) [2] अयं भागः नास्ति (क) [3] नाभिदेशपर्यन्तं (ग) [4] इति (ग)
[5] लुप्तम् (क) [6] सनातनी (ख)

*इत्यशेषशब्दजालमूर्तिकत्वं तस्या एव प्रपञ्चितम् इति तत्कथं परमशिवस्य त्रयीमूर्तिकत्वोपवर्णनम् ? इति चेन्न* । परमशिवस्य वस्तुतः पराशक्तिप्रयुक्तभेदाभावात् । तच्छरीराभिन्नशरीरतया वा शक्तिप्रतापस्य परमशिव एव पर्यवसानादित्यभिप्रायेण तथोक्तमिति सर्वमवदातम् । त्रयीसंज्ञकं वृत्तमिदम् । तथा चोक्तमभियुक्तैः— "रास्त्रयश्चेत् त्रयी नामकं गः ।" प्रतिपादं रगणत्रयं गुरुश्च यत्र भवति तत्[1] त्रयीनामकं वृत्तं भवतीत्यर्थः ।

॥ ५० ॥

न विद्यते ईश्वरो यस्य सोऽनीश्वरः । निरवधिकैश्वर्यशालीत्यर्थः । उच्चनीचात्मके ह्यस्मिन् [2]प्रपञ्चे सर्वेऽपि लोकास्तरतमभावेन तत्तत्प्राणिप्रवर्तकत्वलक्षणैश्वर्यशालिनः एवेति सावधिकमेवैतेषामैश्वर्यम् । निरवधिकैश्वर्यशाली च परमशिव एव । सर्वजगदीशितुः तस्येश्वरान्तरानपेक्षणादिति अनीश्वरत्वं तस्येत्यभिप्रेत्याह —

( ओम् अनीश्वराय नमः )

**ईश्वरत्वावधिर्यः स सर्वेश्वरः ।**
**तस्य नेशः परं त्वं ततोऽनीश्वरः ॥ ५१ ॥**

**ईश्वरत्वावधिरित्यादि** । ईश्वरत्वस्य सकलप्राणिप्रवर्तकत्वलक्षणैश्वर्यस्य योऽयमवधिः मर्यादाश्रयः, स एव सर्वेश्वरः । तस्य सर्वेश्वरस्य ईशः नियन्ता परः अन्यः न विद्यत इत्यतस्त्वमेवानीश्वर इत्यर्थः ।

तथा च श्रुतिः —

न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् ।
स कारणं [3]करणाधिपाधिपो न चास्य कश्चिज्जनिता च नाधिपः ॥ इति ।

---

*....* लुप्तम् (क) [1] तत्तन्नामकं भवति (ग) [2] शारीरप्रपञ्चे (ग)
[3] कारणकारणाधिपो (ग)

इदं च श्रुतिप्रसिद्धं नाम । भावग्राह्यमनीशाख्यं भावाभावकरं शिवम् इति । विमोहाख्यं वृत्तमिदम् । तथा चोक्तमभियुक्तैः— "रौ विमोहा यदि" प्रतिपादं रगणद्वयं यत्र तद्विमोहाख्यं वृत्तं भवतीत्यर्थः । ॥ ५१ ॥

( ओम् सर्वज्ञाय नमः )

षट्त्रिंशत्तत्त्वी त्वय्येवाध्यस्ता ।
सर्वाधिष्ठानं तत्त्वं सर्वज्ञः ॥ ५२ ॥

सर्वं जानातीति सर्वज्ञः । षट्त्रिंशतः तत्त्वानां समाहारः षट्त्रिंशत्-तत्त्वी । तानि त्वय्येवाध्यस्तानि । [1]तथा च प्रागुपदर्शितशिवशक्त्यादि-घटितषट्त्रिंशत्तत्त्वात्मकं यज्जगत् तत् त्वय्येव[1] अध्यस्तम् । अतः तदधि-ष्ठानत्वलक्षणं सर्वज्ञत्वं परमशिवस्येत्यर्थः ।

तथा च श्रुतिः— "स विश्वकृद्विश्वकृदात्मयोनिः ।" विश्वकृत् विश्वाधिष्ठानमित्यर्थः । तथा—[2]"ज्ञः कालकालो गुणि सर्वविद्यः ।"[2] इति । [3]इदं च श्रुतिप्रसिद्धं नाम ।[3]

"यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः ।
तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ॥" इति ।

सर्वज्ञसंज्ञकं वृत्तमिदम् । तदुक्तमभियुक्तैः— "मो गौ सर्वज्ञः ।" प्रतिपादं मगणः [4]गुरुद्वयं चेत्येतद्वृत्तं सर्वज्ञसंज्ञकं भवतीत्यर्थः । ॥ ५२ ॥

( ओम् परमात्मने नमः )

अन्तर्यमयंस्त्वं भूतान्यखिलानि ।
भूयः कथितोऽसि श्रुत्या परमात्मा ॥ ५३ ॥

---

1 इदं नास्ति (क) 2 सर्वज्ञः कालः स एव काली गुणी सर्वविद्यः (ग)
3 इदं श्रुतिसिद्धं नाम (ग) 4 द्विगुरुः (ग)

परमश्चासावात्मा च परमात्मा । पारम्यं चेदमखिलजन्तुजालमभिव्याप्य तत्तत्प्रयोजनप्रवृत्तिजनकत्व[1]लक्षणमन्तर्यामित्वम्[1] ।

तथा च श्रुतिः —

ततः परं ब्रह्म परं बृहन्तं यथानिकायं सर्वभूतेषु गूढम् ।
विश्वस्यैकं परिवेष्टितारं ईशं तं ज्ञात्वा मुक्ता भवन्ति ॥
यो रुद्रो अग्नौ यो अप्सु [2]य ओषधीषु ।
यो रुद्रो विश्वा भुवना[2] विवेश ।
सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी च भगवान् तस्मात्सर्वगतः शिवः ॥

स एव कालो भुवनस्य गोप्ता विश्वाधिपः सर्वभूतेषु गूढः ।
यस्मिन् युक्ता ऋषयो देवताश्च तमेवं ज्ञात्वा मृत्युपाशं छिनत्ति ॥

"यो योनिं योनिमधितिष्ठत्येकः" इत्यभिप्रेत्याह— **अन्तर्यमयन्** इत्यादि । भूतानि प्राणिनः । शेषं स्पष्टार्थम् । [3]इदं च तनुमध्याख्यं वृत्तम्[3] । तथा च सूत्रं— "तनुमध्या त्यौ" । प्रतिपादं [4]तगणो यगण[4]श्चेत्येतद् वृत्तं तनुमध्याख्यं भवतीत्यर्थः । ॥ ५३ ॥

## ( ओम् सोमसूर्याग्निलोचनाय नमः )

***मानसातिगं त्वां विदन्ति नो लोचनानि ते किंश्च तान्यतः ।**
**भान्तमन्वमी भास्वदादयो भान्ति सोमसूर्याग्निलोचनः ॥ ५४ ॥***

---

[1] निमित्तमन्तर्यामित्वं च (ग) [2] लुप्तम् (ग) [3] तनुमध्याख्यं वृत्तमिदम् (ग)
[4] तगणयगणौ ....(ग)

*—* अयं(क) पाठः । गमातृकायां तु भास्वदादयो लोचनानि ते मानसातिगं त्वां विदन्ति नो । भान्तमन्वमी भान्ति साम्प्रतं तेन सोमसूर्याग्निलोचनः ॥ इति पाठः । खपुस्तके च ग-पाठ एव दृश्यते, अन्तिमे चरणे तु सोमशब्दो लेखकप्रमादाल्लुप्तः ।

त्वदीयानि यानि सोमसूर्याग्न्यात्मकानि लोचनानि तानि मानसातिगं त्वां नो विदन्ति। न जानन्ति, न प्रकाशयन्तीति यावत्। तत्र हेतुर्मानसातिगमिति। मानसपदं च इन्द्रियसामान्यवाचि। तथा च इन्द्रियसामान्यजन्यवृत्तिविषयीकरणायोग्यत्वात् जगत्प्रकाशकान्यपि त्वदिन्द्रियाणि त्वत्प्रकाशने असमर्थान्येवेति भावः। "यतो वाचो निवर्तन्ते[1] अप्राप्य मनसा सह"[1] इति श्रुतेः। एतेन सोमसूर्याग्नयो लोचनानि यस्येति नामव्युत्पत्तिः प्रदर्शिता। तदुक्तमानुशासनिके उपमन्यूपाख्याने—

दिवसकरशशाङ्कवह्निनेत्रं
त्रिभुवनसारमपारमीशमाद्यम्।
अजरममरमप्रसाद्य रुद्रं
जगति पुमानिह को लभेत शान्तिम्॥

किञ्च भान्तं स्वतः प्रकाशमानं अनु अनुसृत्य अमी भास्वदादयः सूर्यादयो भान्ति प्रकाशन्ते। अतः सोमसूर्याग्नीन् [2]लोचनयति प्रकाशयतीति सोमसूर्याग्निलोचनः इत्येतन्निर्वचनमपि साम्प्रतं युक्तमित्यर्थः।

[3]तथा च श्रुतिः—

न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति॥ इति।

[4]स्मृतिरपि—

न तद् भासयते सूर्यो न शशाङ्को न पावकः।
यद् गत्वा न निवर्तन्ते तद्धाम परमं मम॥ इति। (गीता)

---

[1] नास्ति (ग) [2] लोचयति (क) [3] श्रुतिश्च (ग) [4] स्मृतिश्चापि

इदं च लोचनाख्यं वृत्तम् । तथा चोक्तमभियुक्तैः—"रो यजौ गुरु लोचनं भवेत्" इति । प्रतिपादं रगणः यगणः जगणः गुरुश्चेत्येतद् वृत्तं लोचनाख्यं भवतीत्यर्थः । ॥ ५४ ॥

हविर्यज्ञमयः सोमः पञ्चवक्त्रः सदाशिवः ।
विश्वेश्वरो वीरभद्रो गणनाथः प्रजापतिः ॥

हविरादीनि नव नामानि निर्वक्ति दुग्धेत्यादिना —

**( ओम् हविषे नमः )**

**दुग्धमात्रस्य कुहरे यथा घृतं**
**प्राणिमात्रस्य दहरे तथा भवान् ।**
**चेतसा संमथित एव लभ्यते**
**हूयमानं त्वमखिलं ततो हविः ॥ ५५ ॥**

हविश्शब्दो घृतवाची । "घृतमाज्यं हविस्सर्पिः" इत्यमरात् । तत्सदृशाय नम इत्येतत् दृष्टान्तपुरस्सरमुपवर्णयति— [1]यथा हि दुग्धमात्रान्तः-संलीनमपि घृतं सम्यक् कथनात् बहिः प्रकाशमापद्यते, तथा प्राणिमात्रान्तः-संलीनोऽपि भवान् श्रवणाद्यनेकसाधनैर्मनसा पुनः पुनः परिचीयमानः प्राप्त इव [2]भवतीत्यर्थः । तथा च श्रुतिः —

घृतमिव पयसि निगूढं
भूते भूते वसति च विज्ञानम् ।
सततं मन्थयितव्यं
मनसा मन्थानभूतेन ॥ इति ॥

---

[1] तथा हि (ख,ग) [2] भवतीत्यर्थः (क;ख,ग)

अथवा हविः हूयमानं सोमरसाद्यात्मकद्रव्यसामान्यं, परब्रह्मस्वरूपं वा तद्रूप [1]इवेत्यर्थः तदुक्तं **शिवपुराणे** —

[2]रसजातं महादेवी देवो रसयिता शिवः । इति ।

तथा च भोक्तव्यवस्तुमात्रस्य देवीरूपतया तदभेदात् परमशिवोऽपि तद्रूपः । तथा —

ब्रह्मार्पणं ब्रह्महविः ब्रह्माग्नौ ब्रह्मणा हुतम् ।
[3]ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना[3] ॥ (गीता)

इति स्मृतेः ब्रह्मात्मकहवीरूपत्वं तस्य इत्यभिप्रेत्याह—**हूयमान**-मित्यादि । स्पष्टमन्यत् । दुग्धाख्यं वृत्तमिदम् । [4]तथा चोक्तमभियुक्तैः[4] —"[5]दुग्धवृत्तं रभजैररुदीरितम्" । प्रतिपादं रगणः भगणः जगणः रगणश्चेत्येतद्वृत्तं दुग्धाख्यं भवतीत्यर्थः । ॥ ५५ ॥

## ( ओम् यज्ञमयाय नमः )

**वेदः पादो यूपो दंष्ट्रानलचयनरसनवदनस्तनूरुहधर्मकः**
**स्रौवश्चञ्चुःसर्पिर्नासो दिवसरजनिनयनयुगः करः सवनत्रयम् ।**
**औद्गात्रान्त्रो वेदीस्कन्धश्चरणयुगलमुपनिषदः प्रवर्ग्यकचभ्रमिः**
**वक्षोदाक्षिण्यो मन्त्रस्फिग्विविधमखकरणतनुकोऽसि यज्ञमयाभिधः**
**॥ ५६ ॥**

यज्ञमयो यज्ञस्वरूपः । मयटः स्वरूपवाचित्वात् । तथा च "यज्ञो वै विष्णुः" इत्यादिश्रुत्यवगतयज्ञपुरुषात्मकतोपयुक्तैः तत्तदवयवैः परमशिव-मेव प्रस्तौति—**वेदः पाद** इत्यादिना । यज्ञाङ्गानामेव परमशिवाङ्गत्वात्

---

[1] इत्यर्थः (ख), तद्धविरित्यर्थः (ग) [2] रजसातं (क) [3] नास्ति (ग)
[4] सूत्रप्रणीतम् (ग) [5] दुग्धवृत्तमिदं (ग)

वेदादीनां पादत्वाद्युत्कीर्तनम् । **अनलचयेनेति** । अनलरसनः, चयनवदनश्चेति क्रमेणान्वयः ।

तनूरुहाणि रोमाणि, तान्येव धर्माः धर्मस्वरूपाणि यस्य स तनूरुहधर्मकः । स्रुव एव स्रौवः, तदात्मकः चञ्चुः दीर्घनासाग्रविशेषः । सर्पिराज्यं, तदात्मिका नासा यस्य सः सर्पिर्नासः । दिवसरजनी दिवारात्री, तदात्मकं नयनयुगं यस्य सः दिवसरजनिनयनयुगः । **सवनत्रयमिति** । प्रातर्माध्यन्दिनं तृतीयं चेति सवनत्रयात्मकः करः । औद्गात्राण्येव अन्त्राणि यस्य सः औद्गात्रान्त्रः । वेदिकास्वरूप एव स्कन्धः भुजसन्धिः । उपनिषदात्मकं चरणयुगलं [1]पादद्वयम् । प्रवर्ग्यात्मकः एव कचभ्रमिः जटानां ग्रन्थिविशेषः वक्षः उरः दाक्षिण्यं दक्षिणास्वरूपं यस्य सः, मन्त्रा एव स्फिक् कटिपार्श्वसन्धिविशेषः इत्येवं रूपेण विविधानि नानारूपाणि यानि मखकरणानि यज्ञाङ्गानि, तत्तनुकः तन्मूर्तिक इत्यर्थः ।

तथा चोक्तं **हरिवंशपद्मपुराणयोः** परमशिवं प्रक्रम्य —

वेदपादो यूपदंष्ट्रः क्रतुहस्तश्चितीमुखः ।
अग्निजिह्वो धर्मरोमा ब्रह्मशीर्षो महातपाः ॥

अहोरात्रेक्षणो [2]दिव्यो वेदान्तश्रुतिभूषणः ।
स्रुवतुण्डश्चाज्यनासः सामघोषस्वनो महान् ॥

धर्मसत्यमयः श्रीमान् क्रमविक्रमसत्क्रियः ।
प्रायश्चित्तनखो धीरः पशुजानुर्महाभुजः ॥

औद्गात्रान्त्रो होमलिङ्गः फलबीजमहौषधिः ।
वाय्वन्तरात्मा मन्त्रस्फिक् विकृतः सोमशोणितः ॥

---

[1] नास्ति (क) [2] नास्ति (क)

वेदीस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान् ।
प्राग्वंशकाशो द्युतिमान् नानादीक्षाभिरर्चितः ॥

दक्षिणाहृदयो योगी महामन्त्रमयो महान् ।
उपाकर्मोष्ठ[1]चिबुकः प्रवर्ग्यावर्तभूषणः ॥

नानाच्छन्दोगतिपथो गुह्योपनिषदासनः ।
छायाफलीसहायो वै मेरुशृङ्ग इवोत्थितः ॥ इति ।

इदं च भुजङ्गविजृम्भिताख्यं वृत्तम् । तथा च पैङ्गलसूत्रम्— "भुजङ्गविजृम्भितं मौ त्नौ नौ सौ ल्गौ वसुरुद्रऋषयः" [2]प्रतिपादं मगणद्वयं, तगणः, नगणत्रयं, रगणः, सगणः, लघुर्गुरुश्चेत्येतद् वृत्तं भुजङ्गविजृम्भिताख्यं भवतीत्यर्थः । अष्टभिरेकादशभिः सप्तमिश्च[3] पादयतिरित्येतद्वृत्तं भुजङ्गविजृम्भिताख्यं भवतीत्यर्थः । ॥ ५६ ॥

( ओम् सोमाय नमः )

**मूर्तिष्वष्टास्वीश तवैका रजनीशो**
**ज्योतिष्टोमस्तस्य हविश्चैडविडश्च ।**
**सौराष्ट्रस्थस्त्वं शिव गङ्गायमुनस्थो**
**गौर्या साकं नित्यविहारीति च सोमः ॥ ५७ ॥**

[4]अष्टमूर्तिषु चन्द्रात्मकत्वात्, ज्योतिष्टोमात्मको यः क्रतुविशेषस्तदात्मकत्वाद्वा, तत्साधनीभूतं यद्धविः हूयमानसोमरसात्मकद्रव्यविशेषः, तदात्मकत्वाद्वा, ऐडविडः कुबेरस्तदात्मकत्वाद्वा, सौराष्ट्राख्यो यो देशविशेषः [5]तत्र सोमनाथ इति प्रसिद्धत्वाद्वा[5], गङ्गायमुनयोर्यत्र संगमः तद्देशे विराजमान-

---

[1] चुबुकः (ख,ग) [2] नास्ति (क) [3] नास्ति (क) [4] अष्टमूर्तिसमष्ट्यात्मकत्वात् (क)
[5] तत्प्रसिद्धत्वाद्वा (क)

त्वाद्वा, उमया सह वर्तमानत्वाद्वा सोमत्वं परमशिवस्येत्याह—**मूर्तिष्वष्टा-स्वित्यादिना** । रजनीशः सोमः, अंशांशिनोरभेदात् स्वांशभूतसोम[1]मूर्त्यात्मकत्वं स्वस्येतिभावः । "यज्ञो वै विष्णुः" इत्यादिश्रुतेर्ज्योतिष्टोमात्मकत्वं तस्य । सोमरसस्यापि परमशिवात्मत्वं [2]हविष्ट्वात् स्कान्दे सनत्कुमारसंहितायां काशीगतदाल्भ्येश्वरलिङ्गप्रस्तावे प्रतिपादितम् —

मतीनां च दिवः पृथ्व्या वह्नेः सूर्यस्य वज्रिणः ।
[3]साक्षादपि च विष्णोश्च सोमो जनयितेश्वरः[3] ॥

*इदं च, सोमः पवते जनिता मतीनाम् इत्यृच उपबृंहणम् । ऋचि तु पूयमानत्वेन सोमस्य कीर्तनात् सोमरसस्य शिवात्मकता । कुबेरस्यापि सोमत्वं मन्त्रतन्त्रे प्रतिपादितम् ।*

**गौर्या साकमित्यनेन** योगार्थः प्रदर्शितः । एतेन व्यष्टिसमष्ट्यात्मकनिखिलवस्तुरूपत्वं परमशिवस्येत्युक्तं भवति । [4]इदं च श्रुतिप्रसिद्धं[4] नाम । "नमः सोमाय च रुद्राय च" इति । मत्तमयूराख्यं वृत्तमिदम् । [5]तथा च सूत्रम्[5]—मत्तमयूरा म्तौ य्सौग् समुद्रनवकौ । प्रतिपादं मगणः तगणः यगणः सगणः [6]गुरुश्च । चतुर्भिर्नवभिश्च पादे यतिरित्येतद्वृत्तं मत्तमयूराख्यं भवतीत्यर्थः । ॥ ५७ ॥

**( ओम् पञ्चवक्त्राय नमः )**

**सर्वेश ब्रह्मतत्त्वेन्द्रियविषयकलाभूतसादाख्यमूर्ति-**
**ष्वेकैकश्येन पञ्चात्मसु तव वदनेष्वादिहीनेषु सत्सु ।**
**योऽयं सुन्दोपसुन्दासुरहननिमित्ताप्सरस्तल्लजेक्षा**
**प्रादुर्भावः स तद्भक्त्यतिरभसकृतेऽजायथाः पञ्चवक्त्रः ॥ ५८ ॥**

---

[1] सूर्यात्मकत्वं (ग) [2] हविष्टत्वात् स्कान्दे(ग), नास्ति(क) [3] नास्ति (क) *....* अयं भागः नास्ति(क,ग) [4] इदं श्रुतिसिद्धं(ग) [5] सूत्रात्(ग) [6] गुरुश्चतुर्भिः(ख,ग)

ऊर्ध्वादिभेदेन पञ्च वक्त्राणि यस्येत्यर्थः । **सर्वेशेत्यादि** । ब्रह्माणि च तत्त्वानि च इन्द्रियाणि च विषयाश्च कलाश्च भूतानि च सादाख्याश्च मूर्तयश्चेति द्वन्द्वः । एकैकश्येन एकैकशः प्रत्येकं प्रत्येकमिति यावत् । **पञ्चात्मस्विति** । तथा च ईशानतत्पुरुषाघोरवामदेवसद्योजाताख्यानि पञ्च-ब्रह्माणि । पुरुषप्रकृतिबुद्ध्यहङ्कारमनोरूपाणि पञ्चतत्त्वानि । श्रोत्रत्वक्चक्षू-रसनघ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि । वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि । शब्दस्पर्शरूपरसगन्धाख्याः पञ्च ज्ञानेन्द्रियविषयाः । वचना-दानगमनविसर्गानन्दाख्याः पञ्च कर्मेन्द्रियविषयाः ।

निवृत्तिप्रतिष्ठाविद्याशान्तिशान्त्यतीताख्याः पञ्च कलाः । पृथिव्य-प्तेजोवाय्वाकाशाख्यानि पञ्चभूतानि । शिवसादाख्यमूर्तसादाख्यामूर्तसादा-ख्यकर्तृसादाख्यकर्मसादाख्याख्यानि पञ्च सादाख्यानि । ब्रह्मविष्णुरुद्रेश्वरसदा-शिवाख्याः पञ्च मूर्तयश्चेति पञ्चपञ्चात्मकानि वदनानीत्यर्थः ।

तदुक्तं **वायवीयसंहितायाम्** —

अथान्याश्चापि तनवः पञ्च ब्रह्मसमाह्वयाः ।
तनुभिस्ताभिरव्याप्तमिह किञ्चिन्न विद्यते ॥

ईशानः पुरुषोऽघोरो वामः सद्यस्तथैव च ।
ब्रह्माण्येतानि देवस्य मूर्तयः पञ्च विश्रुताः ॥

ब्रह्मा विष्णुस्तथा रुद्रो महादेवः सदाशिवः ।
मूर्तयस्तस्य विज्ञेया याभिर्विश्वमिदं ततम् ॥ इत्यादि ।

तथा चैवमात्मकेषु तव वदनेषु अनादिभूतेष्वपि सत्सु [1]योऽयं सुन्दोप-सुन्दाख्यासुरहननार्थं विश्वकर्मणा निर्मिताया अप्सरसस्तिलोत्तमाख्यायाः

[1] नास्ति (ग)

सौन्दर्यातिशयेन जगन्मात्रसंमोहिकायाः दिदृक्षातः प्रादुर्भावः त्वदीयः, स तद्भक्त्युद्रेकमात्रप्रयुक्तो, न त्वन्यार्थ इत्यर्थः ।

तिलोत्तमादिदृक्षाप्रयुक्तमुखबाहुल्यसृष्टिश्च **आनुशासनिके** उमामहेश्वरसंवादे प्रपञ्चिता । यथा उमोवाच[1]—

भगवन् देवदेवेश सर्वदेवनमस्कृत ।
चतुर्मुखो वै भगवान् अभवत् केन हेतुना ॥
भगवन् केन ते वक्त्रमैन्द्रमद्भुतदर्शनम् ।
उत्तरं चापि भगवन् पश्चिमं शुभदर्शनम् ॥
दक्षिणं च मुखं रौद्रं केनोर्ध्वं [2]जटिलावृतम् ।
यथादृशं महादेव श्रोतुमिच्छामि कारणम् ॥
एष मे संशयो देव तन्मे शंसितुमर्हसि ॥

महेश्वरः —

तदहं ते प्रवक्ष्यामि यत्त्वमिच्छसि भामिनि ।
पुरा महासुरौ घोरौ लोकोद्वेगकरौ भृशम् ॥
सुन्दोपसुन्दनामानौ आसतुर्बलगर्वितौ ।
अशस्त्रवध्यौ बलिनौ परस्परजयैषिणौ ॥
तयोरेव विनाशाय निर्मिता विश्वकर्मणा ।
सर्वतः सारमुद्धृत्य तिलशो लोकपूजिता ॥
तिलोत्तमेति विख्याता अप्सराः सा बभूव ह ।
देवकार्यं करिष्यन्ती [3]हावभावसमन्विता ॥

---

[1] उमा (क) [2] जटिनान्वितम् (ग) [3] हासः .... (ख)

[1]मां तु पश्यन्तमायाता[1] रूपेणाप्रतिमा भुवि ।
मया बहुमता चेयं देवकार्यं करिष्यति ॥

इति मत्वा तदा चाहं कुर्वन्तीं मां प्रदक्षिणम् ।
तथैव तां दिदृक्षुश्च चतुर्वक्त्रोऽभवम्प्रिये ॥

ऐन्द्रं मुखमिदं पूर्वं तपश्चर्यापरं सदा ।
दक्षिणं मे मुखं दिव्यं रौद्रं संहरति प्रजाः ॥

लोककार्यकरं नित्यं पश्चिमं मे मुखं प्रिये ।
वेदानधीते सततं अद्भुतं [2]चोत्तरं मुखम्[2] ॥

एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि । इति ।

रूपेणाप्रतिमा सेयं तिलोत्तमा पश्यन्तं मामागम्य उपसृत्य प्रदक्षिणं कुर्वन्ती, अत एव मया बहुमता च सती देवकार्यं करिष्यतीति मत्वा तदाहमनेकमुखेन स्थित इत्यध्याहारेण वाक्यपूरणम् । तथैव, यथा मया चिन्तितं तथैव मामुपसृत्य प्रदक्षिणीकृत्य मत्प्रसादबलेन देवकार्याणि साधयितुं प्रवृत्तां तां दिदृक्षुर्द्रष्टुमिच्छुः चतुर्वक्त्रोऽभवमित्यर्थः[3] ।

एतेन अप्राकृतसौन्दर्यनिधानभूतां पराशक्तिमेव साधनीकृत्य प्रवृत्तेन साक्षात् मदनेनापि चालयितुमशक्यस्य ज्ञानवैराग्यतपःसत्यादिदिव्यगुणगणालंकृतस्य भगवतः परमशिवस्य प्राकृतसौन्दर्यातिशय[4]शालिन्यां तिलोत्तमायां या दिदृक्षा सा तद्भक्त्यतिशय[4]मात्रप्रयुक्तेति भक्तपारवश्यं निसर्गसिद्धमिति एतत्सूचितम् । एवं च सुन्दोपसुन्दाख्यौ यावसुरौ, तयोर्हनननिमित्ता तद्वधहेतुभूता या अप्सरस्तल्लजा, [5]प्रशस्ताः अप्सरसस्तिलोत्तमाख्या, तल्लजेति अप्सरोविशेषणं, सौन्दर्यवती । तदीया या वीक्षा ईक्षणं तत्प्रयुक्तः प्रादु-

---

[1] सा तु पश्यन्तमागम्य (क) [2] चोत्तरे मुखे (ग) [3] भवामीत्यर्थः (ख), भवतीत्यर्थः (क) [4] नास्ति (क) [5] नास्ति (क)

र्भावः, तत्कृते तदर्थः, अजायथाः जातोऽसीत्यर्थः इति । स्रग्धराख्यं वृत्तमिदम् । [1]तथा च पैङ्गलसूत्रं[1]—स्रग्धरा म्रौ भ्नौ यौ य् त्रिसप्तकाः । प्रतिपादं मगणः रगणः भगणः नगणः यगणत्रयं च, सप्तभिः सप्तभिः सप्तभिश्च पादयतिः—[2]इत्येतद्वृत्तं स्रग्धराख्यं[2] भवतीत्यर्थः । ॥ ५८ ॥

## ( ओम् सदाशिवाय नमः )

सार्वकालीनः शिवः सदाशिव इत्यर्थः । [3]नन्वत्र कालकृतपरिच्छेदशून्येऽस्मिन् परमशिवे सार्वकालीनत्वप्रतिपादकं सदेति विशेषणमव्यावर्तकत्वादनुपादेयमेव इत्याशङ्क्य तद्व्यावृत्तिं प्रदर्शयन् भक्तिमात्रेण तथा प्रयोगः परमशिव इत्युपदर्शयति, यो विधीश्वर इत्यादिना—

**यो विधीश्वरदशा सदाशिवः**
**तद्दशापि खलु यः सदाशिवः ।**
**तस्य कालकलना क्व ते तद-**
**स्यौपचारिकतया सदाशिवः ॥ ५९ ॥**

विधीश्वर इत्याद्यन्तग्रहणात् विष्णुरुद्रयोः समुच्चयः । तथा च ब्रह्मविष्णुरुद्रेश्वराणां [4]चतसृणामपि [5]मूर्तीनामसमानकालीनत्वात् पञ्चमी सदाशिवाख्या मूर्तिः, तस्या अपि [6]असमानकालीनत्वात्परमशिवः सदाशिव इति गौणप्रयोगः । एवं च ब्रह्मादीनां पञ्चानामपि उत्तरोत्तरस्य पूर्वपूर्वापेक्षया चिरकालवर्तित्वं, परमशिवस्य कालानवच्छिन्नत्वं च प्रतिपादितं **शिवपुराणे** [7]सृष्टिप्रकरणे—[8]केन मानेन कालेऽस्मि[7]न्नायुः संख्या प्रवर्तते ।

इति पृच्छतः ऋषीन् प्रति वायुवचनम्—

---

[1] नास्ति (ख,ग) [2] एतत्तदेव (ग) [3] नन्वर्थं [4] चतुर्णामपि (ख,ग)
[5] मूर्तीनां समान (क) [6] समान (क) [7] नास्ति (ग)
[8] केन मानेऽस्मिन काले (ख)

आयुषोऽत्र निमेषाणां गणनान्मानमुच्यते ।
अक्षिपक्ष्मपरिक्षेपो निमिषः परिकीर्तितः ॥
तादृशानां निमेषाणां काष्ठा तु दश पञ्च च ॥ इत्यारभ्य,

चतुर्युगसहस्रं यत् तत्कल्प इति कथ्यते ।

इति कल्पमानमुक्त्वा पुनर्वर्णितम् —

कल्पो नाम दिवा प्रोक्तं ब्रह्मणोऽव्यक्तजन्मनः ।
कल्पानां वै सहस्रं तु ब्रह्मवर्षमिहोच्यते ॥
वर्षाणामष्टसाहस्रं [1]यच्च तद्ब्रह्मणो युगम् ।
सवनं युगसाहस्रं[1] ब्रह्मणः पद्मजन्मनः ॥
सवनानां सहस्रं तु त्रिविधं त्रिगुणं तथा ।
कल्प्यते सकलः कालो ब्रह्मणः परमेष्ठिनः ॥
तस्य वै दिवसे यान्ति चतुर्दश पुरन्दराः ।
ब्रह्मा विष्णुदिने चैको विष्णू रुद्रदिने तथा ॥
ईश्वरस्य दिने रुद्रः सादाख्यस्य तथेश्वरः ।
साक्षाच्छिवस्य तत्संख्यात्तदा सोऽपि सदाशिवः ।
तस्मिन् साक्षाच्छिवे नैव कालात्मा संप्रवर्तते ॥ इति ।

अत्र चायमर्थः—कल्पसहस्रमेको वत्सरः । तादृशवत्सराणामष्टसहस्राण्येकं [2]युगम् । तादृशयुगसहस्रमेकं सवनम् । तादृशसवनानां नवसहस्री ब्रह्मणः परमायुः । तादृशब्रह्मपरमायुः विष्णोरेकं दिनम् । तादृशविष्णुपरमायुः रुद्रस्य । तादृशरुद्रपरमायुर्महेश्वरस्य । तादृशमहेश्वरपरमायुः सदाशिवस्य । एकं दिनमिति सर्वत्र संबध्यते । परमेश्वरस्य तु काल-

---

[1] नास्ति (ग) [2] नास्ति (ख)

कलनाविरहादेकं दिनमिति व्यवहारमात्रमित्यर्थः । अत एव तत्रैव प्रदेशान्तरे —

कालावच्छेदभेदेन गुरूणामप्यसौ गुरुः ।
सर्वेषामेव सर्वेश कालावच्छेदवर्जितः ॥ इति ।

[1]योगसूत्रमपि— "स पूर्वेषामपि गुरुः कालेनानवच्छेदात्" इति[1] ।

अहर्न विद्यते तस्य न रात्रिरिति धारयेत् ।
उपचारस्तु क्रियते लोकानां हितकाम्यया ॥ इति ।

तस्येति । एतादृशस्य नैव कालकलना [2]कालकृतपरिच्छेदः । कुत इति । उपचारमात्रेण परमशिवे सदाशिव इति प्रयोगो लोकानामित्यर्थ इति ।

[3]इदं च श्रुतिप्रसिद्धं[3] नाम । "ब्रह्मा शिवो मे अस्तु सदाशिवोम् ।" रथोद्धताख्यं वृत्तमिदम् । [4]तथा च पैङ्गलं सूत्रं[4]— रथोद्धता नौं लौंग् । प्रतिपादं रगणः नगणः रगणः लघुर्गुरुश्चेत्येतद् वृत्तं रथोद्धताख्यं भवतीत्यर्थः । ॥ ५९ ॥

## ( ओम् विश्वेश्वराय नमः )

विश्वेषामीश्वरो विश्वेश्वर इत्यमुमर्थं प्रसिद्धिपूर्वकमुपपादयति—केवलमित्यादिना —

केवलं चिन्मयज्योतिरात्मैव काशी
तेन सर्वाणि विश्वान्यतीतापि विश्वम् ।
तत्र वासात् परिच्छेदबुद्ध्या गृहीतः
काशिकाधीश्वरोऽपीश विश्वेश्वरस्त्वम् ॥ ६० ॥

---

[1] नास्ति (क) [2] नास्ति (ख,ग) [3] इदं श्रुतिप्रसिद्धं (ग) [4] सूत्रप्रणीतं (ग)

चिन्मयज्योतिश्चित्प्रकाशात्मिका केवलमात्मस्वरूपैव काशीत्युच्यते । नेन सर्वाणि विश्वान्यतीतापि अखिलप्रपञ्चातिक्रान्तापि सा विश्वं विश्वमिति व्यवहारविषय एव । विश्वब्रह्मणोरनन्यत्वादित्यर्थः[1] । तत्र तादृश्यां पुरि निवसनात् । परिच्छेदबुद्ध्या काशिकाधीश्वर इति परिगृहीतोऽपि परमार्थ-बुद्ध्या विश्वेश्वर एव । ब्रह्मसार्वात्म्यस्य श्रुतिस्मृतिप्रसिद्धत्वेन तदात्मिकायां पुर्यां निवसितुरप्युपपन्नं विश्वेश्वरत्वमिति भावः । स्पष्टमन्यत् । विश्वाख्यं वृत्तमिदं, तथा चोक्तमभियुक्तैः । रैश्चतुर्भिर्युतं गेन युक्तं च विश्वम् इति । प्रतिपादं रगणचतुष्टयं गुरुश्चेत्येतद्वृत्तं विश्वाख्यं [2]भवतीत्यर्थः । ॥ ६० ॥

## ( ओम् वीरभद्राय नमः )

श्रीगौर्या वीरः स्वीकृतः पुत्रबुद्ध्या
क्रोधाग्निस्वेदोत्पादितो भद्रनामा ।
भद्रायोगाद्वा राजपूर्वासशाली
तद्वांस्तद्रूपस्त्वं ततो वीरभद्रः ॥ ६१ ॥

वीर इति कश्चित्परमशिवपुरद्वारवर्ती गणविशेषः । स च पराशक्त्या पुत्रत्वेन परिगृहीतः इत्येतत्पद्मपुराणे प्रपञ्चितम् । यथा—

स एष वीरको देवि सदा मे हृदयप्रियः ।
नानाश्चर्यगुरुर्द्वारि गणेश्वरगणार्चितः ॥

इत्यादितत्प्रशंसाश्रवणोत्तरं देवीवचनम् —

ईदृशस्य सुतस्यास्ति ममोत्कण्ठा पुरान्तक ।
कदाहमीदृशं पुत्रं द्रक्ष्याम्यानन्ददायकम् ॥

---

[1] इति भावः (ख,ग) [2] नामेत्यर्थः (ग)

शिवः [1]उवाच—

एष एव सुतस्तेऽस्तु नयनानन्द[2]दायकः ।
त्वया पुत्रः कृतार्थः स्याद्वीरकोऽपि सुमध्यमे ॥ इति ।

वीर एव वीरकः । स्वार्थे कप्रत्ययात् । परमशिवक्रोधाग्निना उत्पन्नो भद्र इति काशीखण्डे प्रतिपादितम् ।

ततस्तत्कोपजाद्वह्नेराविरास महाद्युतिः ।
भद्रस्तु प्रतिघाकारः कालमृत्युप्रकम्पनः ॥ इति ।

तथा च वीरश्च भद्रश्च वीरभद्रौ । तावस्य स्त इति वीरभद्र इत्यर्थः । अथ वा दक्षाध्वरप्रहरणार्थं परमशिवेन उत्पादितस्य वीराख्यस्य, पराशक्त्युदिता या भद्राख्या शक्तिस्तद्योगाद्वीर एव भद्रः इत्याह **भद्रायोगाद्वेति** ।

तदुक्तं **वायवीयसंहितायां** यथा—

दग्धुं दक्षाध्वरं विप्रा देवी देवमचोदयत् ।
देव्या संचोदितो देवो दक्षाध्वरजिघांसया ॥
ससर्ज सहसा वीरं वीरभद्रं गणेश्वरम् ।
सहस्रवदनं देवं सहस्रचरणेक्षणम् ॥

तथा —

मन्युना चासृजद् भद्रां भद्रकालीं महेश्वरी ।
आत्मनः कर्मसाहित्यात्तेन गन्तुं सहैव तु ॥
तं दृष्ट्वावस्थितं वीरं भद्रं कालाग्निसन्निभम् ।
भद्रया सहितं प्राह भद्रमस्त्विवति शङ्करः ॥ इति ।

---

[1] नास्ति (क) [2] हेतुकः (ख,ग)

तथा च वीरश्चासौ भद्रश्च वीरभद्रः, तद्वानित्यर्थः । राजपूः राजपुरम् । तत्र वस्तुं शीलमस्यास्तीति तद्वासशाली । राजपुरमिति च क्षेत्रविशेषः वेङ्कटाचलपरिसरे प्रसिद्धः । **तद्वानिति** । द्वन्द्वोत्तरं कर्मधारयोत्तरं वा मत्वर्थीयाच्प्रत्यय[1]योगाद्रूपसिद्धिः । तद्रूप इति । तथा च वीरभद्रोभयवत्वात् वीराभिन्नभद्रवत्त्वाद्वा तद्वत्त्वं, राजपुराख्यक्षेत्रविशेषे वीरभद्रेश्वर इति च प्रसिद्ध्या तत्स्वरूपत्वं चेत्यर्थ इति ।

अत्र च वीरभद्रावतारः कल्पभेदेन बहुधा प्रपञ्चितः । तथाहि । **ब्रह्माण्डपुराणोत्तरभागे** हयग्रीवागस्त्यसंवादे ललितोपाख्याने यथा —

अधिदेवो महादेवो ललाटतलसंभवम् ।
एकं स्वेदपयोबिन्दुं नखाग्रेणाक्षिपत्क्षितौ ॥
तत उत्तस्थिवानेको लोकघस्मरविग्रहः ।
कालाग्निरिव दीप्ताङ्गो वीरभद्रो गणेश्वरः ॥
वीरभद्रः स कैलासान्निर्जगाम महाजवः ।
तस्यैव रोमकूपेभ्यो दीप्तान्निटिललोचनात् ॥
कर्णाभ्यां चैव नासाभ्यामास्याद्दंष्ट्राद्वयङ्करात् ॥
प्रसूता बहवो लोकघस्मराः प्रमथेश्वराः ॥ इति ।

तथा **वामनपुराणे**ऽपि "क्रुद्धस्य शिवस्य शरीरनिःसृतात्तेजसस्तदुत्पत्तिः प्रदर्शिता । यथा —

एतच्छ्रुत्वा वचो रौद्रं रुद्रः कोपान्वितोऽभवत्[2] ।
क्रुद्धस्य सर्वगात्रेभ्यो निश्चेरुः सहसार्चिषः ॥
सह क्रुद्धाः त्रिणेत्रस्य गात्ररोमान्तरोद्भवाः ।
गणाः संख्यमुखा जाता वीरभद्रपुरोगमाः ॥ इति ।

---

[1] योगात्सिद्धिः (ग) [2] नास्ति (ग)

तथा वराहपुराणेऽपि यथा—

शुश्राव याजिनां [1]चोच्चैः इन्द्रागच्छेति [2]कीर्तितम् ।
ततः श्रुत्वा महातेजाः सर्वज्ञः परमेश्वरः ॥
चुकोप च भृशं देवो वाक्यं चेदमुवाच ह ।

इत्यादिना दक्षाध्वरश्रवणजन्यकोपमुपन्यस्य पुनरुक्तं —

तस्याननात्ततो ज्वाला गात्रेभ्यो निर्ययुस्तदा ।
ततो भूतानि वेताला उच्छुष्माः प्रेतपूतनाः ॥
कूष्माण्डा यातुधानाश्च सर्वे प्रज्वलिताननाः ।
उत्तस्थुः कोटिश[3]स्तस्माज्ज्वाला प्रहरणान्विताः ॥
एवं कृत्वा स सामग्रीं देवदेवः प्रतापवान् ।
जगाम दक्षयज्ञाय क्रोधाद्रुद्रः प्रतापवान् ॥ इत्यादि ।

एवमन्यत्राप्यन्यथा प्रपञ्चितम् । तच्च प्रकृतानुपयोगान्नेह संलिख्यत इति । वैश्वदेवीसंज्ञकं वृत्तमिदम् । [4]तदुक्तं पैङ्गलेन वैश्वदेवी मौ याविन्द्रियऋषयः । प्रतिपादं मगणद्वयं [5]यगणद्वयं च, पञ्चभिः सप्तभिश्च यतिरित्येतद् वृत्तं [6]वैश्वदेव्याख्यं भवतीत्यर्थः इति । ॥ ६१ ॥

## ( ओम् गणनाथाय नमः )

गणनं गणः गणशब्दस्य संख्यावाचित्वात् । तथा च गणानामेकत्वादिपरार्धपर्यन्तानां संख्यानां नाथो गणनाथ इत्यभिप्रेत्याह शशिकरेत्यादि ।

**शशिकरगुणमुखसंख्यानां प्रमथतुषितमयमुख्यानाम् ।**
**अधिपतिरसि शिव कैलासे पुरि निवससि गणनाथस्त्वम् ॥ ६२ ॥**

---

[1] चोरैः (ग) [2] कीर्तितः (ख,ग) [3] तत्र (ख,ग) [4] नास्ति (ग)
[5] नास्ति (ख) [6] वैश्वदेवीसंज्ञ (ग)

शशी एकः, करौ द्वौ गुणास्त्रयः । तथा च एकद्वित्रित्वमुखाः परार्धान्ताश्च याः संख्याः तासामित्यर्थः । अधिपतिरित्यग्रिमेण संबन्धः । अथवा नन्दिभृङ्गिमहाकालप्रभृतयो ये प्रमथगणाः ।

" आदित्यविश्ववसवस्तुषिता भास्वरानिलाः ।
महाराजिकसाध्याश्च रुद्राश्च गणदेवताः ॥"

इति तुषितमुख्या गणपदव्यवहार्या [1]देवाः मयरसतजभनसंज्ञकाश्च मयादि-गणाः । तथा च गणानां प्रमथादीनां नाथो गणनाथ इत्यभिप्रेत्याह—**प्रमथे**त्यादि । यद्यपि मयरसादेर्गणसंज्ञा छन्दस्सूत्रेषु न दृश्यते, तथापि " लः समुद्रा गणः " इति सूत्रस्य द्विमात्रादिषण्मात्रान्तानां गणसंज्ञा-विधायकतापरत्वेन भाष्यवार्तिकराजादौ व्याख्यानाददोषः । अथवा परम-शिवाष्टषष्टिक्षेत्रपरिगणनायां गणनाथस्य कैलासवासित्वेन प्रतिपादनात् तथेत्याह—**कैलासे**त्यादि । स्पष्टमन्यत् । वृत्ताख्यं वृत्तमिदम् ।

[2]तथा च पैङ्गलसूत्रम्[2] । " वृत्ता नौ स्गौग् " प्रतिपादं नगणद्वयं सगणः गुरुद्वयं चेत्येतद्वृत्तं वृत्ताख्यं भवतीत्यर्थः । ॥ ६२ ॥

## ( ओम् प्रजापतये नमः )

प्रजानां पतिः प्रजापतिरित्यभि[3]प्रायेणाह अन्तरिक्षेत्यादि ।

**अन्तरिक्षभूमिनाकसंस्थिता**
**याः सहस्रशः सहस्रसंहिताः ।**
**रुद्रनामिकाः प्रजाः सृजत्यतः**
**स्थाणुनामको भवान् प्रजापतिः ॥ ६३ ॥**

---

[1] देवताः (ग) [2] सूत्रात् (ग) [3] प्रेत्याह (ग)

भौमान्तरिक्षदिव्याः रुद्रनामिकाः सहस्रसंख्याकाः याः प्रजास्ताः सहस्रशः सृजतीत्यर्थः । तथा च **श्रुतिः** —

सहस्राणि सहस्रशो ये रुद्रा [1]अधिभूम्यां
तेषां सहस्रयोजनेव धन्वानि नन्मसि[1] ।
नमो रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे
ये दिवि येषाम् [2]अन्नं वातो वर्षमिषवः तेभ्यः ॥ इत्यादि ।

स्थाणुनामक इति । तथा च **वाराहपुराणे** गौरीविवाहप्रकरणे— सर्गादौ ब्रह्मललाटादुत्पन्नः प्रजापतीनामन्यतमः स्थाणुसंज्ञकः । स एव प्रजाः सृष्ट्वा जले मग्नस्तपः चरन् स्थितः कालान्तरे पुनर्जलादुत्तीर्य गणान् सृष्ट्वा तैः सहितो दक्षाध्वरं ध्वंसयामासेत्युक्तम् । यथा —

रुद्रक्रोधोद्भवो यस्तु पूर्वं मग्नो महाजले ।
[3]स सहस्रार्कसंकाशो[3] निश्चक्राम जलात्तदा । इति ।

एवं प्रजापतेः स्थाणुनामकत्वमित्यर्थः । श्येनीसंज्ञकं वृत्तमिदम् । [4]तथा च पैङ्गलं सूत्रं[4] "श्येनी जौ लौंग्" प्रतिपादं रगणः जगणः [5]रगणो लघुर्गुरुश्च इत्येतद् वृत्तं श्येन्याख्यं [6]भवतीत्यर्थः । ॥ ६२ ॥

हिरण्यरेता दुर्धर्षो गिरीशो गिरिशोऽनघः ।
भुजङ्गभूषणो भर्गो गिरिधन्वा गिरिप्रियः ॥

एतन्नामनवकं निर्वक्ति—**त्वदित्यादिना** ।

---

[1] नास्ति (ग) [2] नास्ति (क) [3] नास्ति (क) [4] पैङ्गले (ग) [5] नास्ति (क)
[6] भवन्ति (ग)

( ओम् हिरण्यरेतसे नमः )

त्वद्वीर्ययोगेन भवेद्धिरण्यं
यद्वाग्निरूपोऽस्यथ वा जलार्धे ।
[1]त्यक्तेन वीर्येण बभूव [2]हैम-
मण्डं तदीशासि हिरण्यरेताः ॥ ६४ ॥

हिरण्यं रेतो यस्येति बहुव्रीहिः । रेतसि हिरण्यशब्दप्रयोगश्च तज्जनकत्वरूप[3]संबन्धयोगात्, आयुर्वै घृतमित्यादिवत् इत्यभिप्रेत्याह — **त्वद्वीर्ययोगेनेति** । [4]पारदयोगेन हिरण्योत्पत्तिस्तु रसरत्नाकरादौ प्रसिद्धैव[4] । **हिरण्यमिति** । तदुक्तं **ब्रह्माण्डपुराणे** दानप्रकरणे यथा—

हिमवद्दुहिता पूर्वमुमा नाम पतिव्रता ।
पूर्वजन्मनि सा चासीद्दक्षस्य तनया सती ॥
दक्षकोपात्तु तत्याज सती चात्मकलेवरम् ।
हिमवद्दुहिता जज्ञे लोके गौरीति विश्रुता ॥
दत्ता तेनापि सा तस्मै प्रणिपत्य पिनाकिने ।
विवाहं कारयामास विधिवद्दुहितुस्तथा ॥
वैवाहिकेन विधिना जुहावाग्निं पितामहः ।
होमं च कुर्वतस्तस्य विकारो मान्मथो ह्यभूत् ॥
रूपं दृष्ट्वा ततो देव्या रेतः स्कन्नं महात्मनः ।
पद्भ्यां च मृदितं तेन बहुधा समपद्यत ॥
तत्रोत्पन्ना महात्मानो वालखिल्या मरीचयः ।
अग्नौ च शेषमपतत् तच्चाभूज्ज्वलनप्रभम् ॥

---

[1] युक्तेन (ख,ग) [2] हैम (ग) [3] सम्बन्धात् (ग) [4] नास्ति (क)

जाज्वल्यमानं दीप्त्या चाथाग्निमध्यगतं यथा ।
शशंसिरे ततो देवाः दृष्ट्वा पुत्रं विभावसोः ॥
जगृहुः शिरसा चैव पुण्यत्वात्ते मुदान्विताः ।
ऊचुश्च देवगन्धर्वा मुनयश्च तपोधनाः ॥
विभूषणं च ते देवाश्चक्रुरुत्तमतेजसः ।
देवपत्न्यास्तथा चैव भूषणत्वे न्ययोजयन् ॥
एवं सुवर्णमुत्पन्नमाग्नेयं ब्राह्ममेव च ।
पवित्रं परमं लोके सुवर्णेन समं क्वचित् ॥
न दृश्यते द्रव्यजातं तद्दानं भूषणं तथा ॥ इति ।

अथ वा " हिरण्यरेता हुतभुग्दहनो हव्यवाहनः " इत्यमरात् अग्नि-स्वरूपत्वात्तथा इत्याह—**यद्वेति** ।

**अग्निरूप** इति । तदुक्तं **शिवपुराणे** —

अहमग्निशिरोनिष्ठस्त्वं सोमशिरसि स्थिता ।
अग्नीषोमात्मकं विश्वमावाभ्यां समधिष्ठितम् ॥ इति ।

अथवा [1]हिरण्यशब्दः [1]हिरण्यात्मना परिणतब्रह्माण्डपरः । तदेव रेतो यस्येति तथेत्यभिप्रायेणाह—**अथवेति** । **जलार्धेत्यादि** । पुरा हि रुद्रेण सर्गादावपः सृष्ट्वा तन्मध्योत्सृष्टस्य वीर्यस्य हैमात्मकब्रह्माण्डात्मना परि-णतत्वस्य **स्कान्दे** सौरसंहितायां प्रदर्शितत्वात् । यथा—

त्रिमूर्तीनां तु सर्गस्यानन्तरं परमः शिवः ।
शब्दादीनां तु भूतानामुत्पत्तिं कुरुते स्वयम् ॥

---

[1] नास्ति (क)

इत्यादिना त्रिमूर्त्यादिसर्गमुक्त्वा,

सदाशिवेश्वरौ रुद्रस्तथा नारायणो विधिः ।
इति नाम्ना प्रकीर्त्यन्ते तेषु रुद्रः शिवाज्ञया ॥

पुरस्तादण्डसर्गस्य ससर्जादौ द्विधा पुनः ।
अपामेकांशके विद्वान् स्वकं वीर्यमपासृजत् ॥

तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयं विष्णुः ब्रह्मांशेन समन्वितः ॥

आपो नारा इति प्रोक्ताः सूक्ष्मास्ता मुनिसत्तमाः ।
शिवस्य नरसंज्ञस्य यतः कार्याणि तास्ततः ॥

ता यदस्यायनं प्रोक्तं तेन नारायणः स्मृतः ।
अंशोपाधिवशेनैव ब्रह्मेति परिकीर्तितः ॥
अपामन्तरवस्थानान्नारायण इतीरितः । इति ।

जलार्धे त्यक्तेन वीर्येण हैममण्डं बभूवेत्यन्वयः । ईशेति संबुद्धिः । शेषं स्पष्टम् । इन्द्रवज्राख्यं वृत्तमिदम् । तथा च पैङ्गलं सूत्रम्, "इन्द्रवज्रा तौ ज्गौग्" । प्रतिपादं तगणद्वयं जगणः गुरुद्वयं चेत्येतद् वृत्तमिन्द्रवज्राख्यं भवतीत्यर्थः । ॥ ६४ ॥

## ओम् दुर्धर्षाय नमः ।

दुःखेनापि धर्षयितुमशक्यो दुर्धर्षः । [1]कथमप्यलब्धव्ये दुर्लभ इति प्रयोगात् । सर्वातिशयबलशालीत्यर्थ इत्यभिप्रेत्याह—**कैलासे** इत्यादि ।

**[2]कैलासे शिखरिणि पौलस्त्यप्रागल्भ्यं तृणसमतां प्राप ।**
**एवं सत्यभिभवकारी कस्तस्मात्त्वं भवसि हि दुर्धर्षः ॥ ६५ ॥**

---

[1] कथमप्यलभ्ये (ख) [2] इदं पद्यं नास्ति (ख)

पौलस्त्यप्रागल्भ्यं, पौलस्त्यस्य पुलस्त्यवंशोद्भवस्य दशाननस्य यत् प्रागल्भ्यमात्मीयं यावद् बलं, तत् तृणसमतां प्राप्तमित्यतः, को वा परमशिव-पराभव[1]कारी भवेत्? न कोऽपीत्यर्थः। तथा च श्रुतिः— "न तत्-समश्चाभ्यधिकश्च विद्यते" इति। स्पष्टमन्यत्। पणवाख्यं वृत्तमिदम्। [2]तथा च पैङ्गलसूत्रम्[2]—पणवो म्नौ य्गौ। प्रतिपादं मगणः नगणः यगणः गुरुश्च इत्येतद् वृत्तं पणवाख्यं भवतीत्यर्थः। ॥ ६५ ॥

## ( ओम् गिरीशाय नमः )

गिरि वैदिकवाक्ये ईशः समर्थः इत्यभिप्रेत्याह —

**भूरिगुणे पदवाक्ये निष्कलुषे सुसमर्थः।**
**पर्वतराडपि शम्भो तेन मतोऽसि गिरीशः॥ ६६ ॥**

**भूरिगुण** इति। ईश इत्यस्य व्याख्यानं सुसमर्थ इति। अथवा गिरीणां मेरुमन्दरप्रभृतीनामीशोऽधिपतिरिति तथा इत्याह—**पर्वतराडपीति**। पर्वताधिपत्यं च [3]शिवस्य **हरिवंशे** धन्याश्चर्योपाख्याने नारदं प्रति पर्वतानां च वचनेन दर्शितं यथा—

ब्रह्मर्षे न वयं धन्या नाप्याश्चर्याणि सन्ति नः।
अस्माकमीश्वरः शूली गिरीशो वृषभध्वजः॥
नाश्चर्यो वापि धन्यो वा तस्मात् परतरो भुवि। इति।

चित्रपदाख्यं वृत्तमिदम्। तथा च पैङ्गलसूत्रम्—"चित्रपदा भौ गौ"। प्रतिपादं भगणद्वयं गुरुद्वयं चेत्येतद् वृत्तं चित्रपदाख्यं भवतीत्यर्थः। ॥ ६६ ॥

---

[1] करो (क) [2] सूत्रोक्तं (ग) [3] शिवरहस्ये (ग)

( ओम् गिरिशाय नमः )

**मेरुपर्वतमपि धनुर्हेतवे कृशयसितराम् ।**
**पर्वते निवससि सुखं नाथ तद्भवसि गिरिशः ॥ ६७ ॥**

गिरिं मेरुपर्वतमपि श्यति [1]चापार्थं तनूकरोति इति गिरिशः । अथवा गिरौ शेते इति गिरिशः । शयनं चात्र [2]न प्राकृतं विवक्षितम् । किन्तु सुखावस्थानात्मकमेवेत्याशयेनाह—**मेरुपर्वतमपी**त्यादि । स्पष्टोऽर्थ । [3]इदं च श्रुतिप्रसिद्धं नाम[3] । "नमो गिरिशाय च शिपिविष्टाय च" इति । हलमुखीसंज्ञकं [4]वृत्तमिदम् । तथा च पैङ्गलं सूत्रम्—"हलमुखी नौस्" प्रतिपादं रगणः नगणः सगणश्चेत्येतद् वृत्तं हलमुखीसंज्ञकं [4]भवतीत्यर्थः । संज्ञात्वेऽपि पिप्पल्यादेराकृतिगणत्वात् ङीप् भवतीति "नखमुखात् संज्ञायाम्" (४-१-५८) इत्यस्य न प्रवृत्तिः । ॥ ६७ ॥

( ओम् अनघाय नमः )

न विद्यते अघं दुःखं पापं व्यसनं वा यस्मिन् सोऽनघः । "मूल्ये पूजाविधावर्धेंहोदुःखव्यसनेष्वघम्" इत्यमरात् । तथा च दुःखस्य पाप-जन्यत्वात् व्यसनस्य च दुःखजन्यत्वात् पूर्वपूर्वापाये उत्तरोत्तरापायात् त्रितयशून्यत्वम् । अत एव त्रैलोक्याधिपत्यं चेत्याशयेनाह —

**दुःखं नाथ न ते पापं च व्यसनम् ।**
**त्रैलोक्याधिपते तस्मादस्यनघः ॥ ६८ ॥**

**दुःखमित्यादि** । दुःखं पापं व्यसनं चेति त्रितयमपि यतस्तव न विद्यते, अतस्त्वमनघो भवसीत्यर्थः ।

---

[1] चार्थः (ख) [2] नास्ति (ख) [3] श्रुतिसिद्धं नामेदम् (ग)
[4] अयं भागः नास्ति (ख)

"अयमात्मापहतपाप्मा विजरो विशोकः" इति,

"हृत्पुण्डरीकं विरजं विशुद्धं
विचिन्त्य मध्ये विशदं विशोकम् ।
अचिन्त्यमव्यक्तमनन्तरूपं
शिवं प्रशान्तममृतं ब्रह्मयोनिम् ॥" इति,

"समस्तसाक्षी तमसः परस्तात्" इत्यादिश्रुतेः,

[1]निश्चिन्त्यो निर्गुणो नित्यो निरवद्यो निरामयः ।
निर्दुःखो निरहङ्कारो निर्गुणो गणनायकः ॥ इत्याद्यागमाच्चेति ।

[2]त्रैलोक्याधिपते इति । स ब्रह्म स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट् ।[3]

स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः ।
स एव सर्वं यद् भूतं यच्च भव्यं सनातनम् ॥

[3]इत्यादिश्रुत्या सर्वात्मकत्वेन त्रैलोक्याधिपत्यस्य प्रतिपादितत्वादित्यर्थः । अनघाख्यं वृत्तमिदम् । [4]तथा चोक्तमभियुक्तैः[4]—"मात्सश्चेदनघः" इति । प्रतिपादं मगणः सगणश्चेत्येतद् वृत्तमनघाख्यं भवतीत्यर्थः । ॥ ६८ ॥

## ( ओम् भुजङ्गभूषणाय नमः )

**अभिचारसमर्थदारुकावनगैः प्रहितानहीन् दधत् ।**
**गरुडादपि बिभ्यतस्तनौ कथितोऽसि भुजङ्गभूषणः ॥ ६९ ॥**

भुजाभ्यां गच्छन्तीति वा, भुज कौटिल्य इति धातोः भुजं कुटिलं यथा भवति तथा गच्छन्तीति वा भुजङ्गाः, त एव भूषणं यस्येति भुजङ्गभूषणः ।

---

[1] अचिन्त्यो (ग) [2] नास्ति (ख,ग) [3] इति श्रुतिभिः [4] सूत्रोक्तं (ग)

**अभिचारेति।** अभिचारेषु अन्येषामनिष्टापादनेषु समर्थाः कृत-बुद्धयो ये दारुकावनगाः, तद्वासिनो मुनिगणाः, तैः प्रेषितान्। अथ च गरुडाद्वैनतेयादपि बिभ्यतः भयाकुलितचित्तांश्चाहीन् सर्पविशेषान् वासुकि-प्रभृतीन् [1]तनावाभरणत्वेन स्वीकुर्वन् भुजङ्गभूषण इति प्रसिद्धो भवसीत्यर्थः।

तथा चोक्तं **स्कान्दे** —

ततः पञ्चफणा नागा निःश्वसन्तो विषोल्बणाः।
शीघ्रमुत्थाय कुण्डेभ्यः समाजग्मुर्महेश्वरम्॥

तानुपादाय नागेन्द्रान् ज्वलितान् उपशोभितान्।
दधाराभरणत्वेन तेनासीन्नागभूषणः॥

अपरैरपि नागेन्द्रैः वासुकिप्रमुखैः शिवः।
वैनतेयभयात्प्राप्तैरलंचक्रे निजां तनुम्॥ इति।

अपरान्तिकाख्यं वृत्तमिदम्। तथा च पैङ्गलसूत्रम्—[2]युगेऽपरान्तिका। पूर्वोक्तलक्षणकस्य वैतालीयस्य समपादलक्षणाश्चत्वारोऽपि पादाश्चेत्, तद-परान्तिकाख्यं मात्रावृत्तं भवतीत्यर्थः। ॥ ६९ ॥

## ( ओम् भर्गाय नमः )

भर्ज्यन्ते दह्यन्ते पापराशयोऽनेनेति भर्गः। सर्वपापनिवर्तक [3]इत्यर्थः। पाकार्थाद् भृज्जतेः करणे घञि "भ्रस्जो रोपधयोः (६-४-४७) इति रमागमे च, चोः कुः (८-२-३०) इति कुत्वे च रूपमित्यभिप्रायेणाह —

**भर्ज्यन्ते दुरितानां सन्दोहा यदवाप्त्या।**
**गायत्रीप्रतिपाद्यस्त्वं तस्मादसि भर्गः॥ ७०॥**

---

1 तन्वाभरणत्वेन (ख,ग) 2 युगपरान्ति (ग) 3 इत्यर्थाद्वा (ग)

**भर्ज्यन्त** इति । यस्य परमशिवस्य अवाप्त्या प्राप्त्या दुरितानां सन्दोहाः भर्ज्यन्त इत्यन्वयः । पापनिवर्तकत्वं परमशिवस्य **शिवधर्मोत्तरे** प्रसिद्धम् । यथा —

छित्वा भित्वा च भूतानि हत्वा सर्वमिदं जगत् ।
यजेदेकं विरूपाक्षं न स पापेन लिप्यते ॥ इति ।

अथ वा "भर्गो देवस्य धीमहि" इति श्रुतिप्रसिद्ध्या वा तथेत्याह —**गायत्रीति** । भर्गशब्दश्चायमकारान्त इत्यभिप्रायः । अथ एव माधवीये **स्मृतिरत्नेऽपि**[1]—

तदित्येतत्परं ब्रह्म ध्येयं तत्सूर्यमण्डले ।
भर्गः स साक्षात्कारेणाविद्यातत्कार्यदाहकः ॥ इति ।

**योगयाज्ञवल्क्ये** अकारान्त एव भर्गशब्दः प्रयुक्तः, यथा—

देवस्य सवितुर्मध्ये यो भर्गो नो[2]धियः क्रमात् ।
प्रचोदयात्तं वरेण्यं धीमहीत्यन्वय[3]क्रमः ॥ इति ।

अत एव [4]**मैत्रायणीय**शाखायां गायत्र्यर्थनिरूपणावसरे एव रुद्रो भर्गात्मक इति श्रूयते । गायत्रीप्रतिपाद्यत्वं च परमशिवस्य प्रतिपादित-**मादित्यपुराणे** यथा —

गायत्र्याः परमं तत्त्वं देवदेवो महेश्वरः ।
इति ध्यात्वा जपेद् विद्वान् गायत्र्याः फलमश्नुते ॥ इति ।

---

[1] ....पि यथा (ख,ग) [2] विधिः (ग) [3] क्रमम् (ग), अन्वयः क्रमः (ख)
[4] मैत्रावरुणाय (ख)

कौर्मे राजवंशानुकीर्तनेऽपि । यथा —

राजा वसुमनास्तत्र रविमण्डलमध्यगम् ।
समुपासिष्ट गायत्र्या पुरुषं रुक्मविग्रहम् ॥
[1]अनुग्रहार्थं तस्याथ भगवान् परमः शिवः ।
आविर्भूय रवेर्बिम्बादस्मै रूपमदर्शयत् ॥
[2]शिवशक्तिमयं दिव्यं चन्द्रार्धकृतशेखरम् ।
त्रिलोचनं नीलकण्ठं ब्रह्मेन्द्रोपेन्द्रवन्दितम् ॥
अनुगृह्य च तं कालं देहान्तेऽदान्निजं पदम् ।
तुष्टश्चिरतरं तस्य गायत्र्याराधनादिभिः ॥ इति ।
यो देवः सवितास्माकं धियो धर्मादिगोचराः ।
प्रेरयेत्तस्य [3]भर्गस्तु तद्वरेण्यमुपास्महे ॥

इति [4]स्मृत्यन्तराश्रयणे तु प्रकृतेऽपि सान्तमेव नामास्तु । मदलेखाख्यं वृत्तमिदम् । [5]तथा चोक्तमभियुक्तैः[5]— "म्सौ गः स्यान्मदलेखा" इति । प्रतिपादं मगणः सगणः गुरुश्चेत्येतद् वृत्तं मदलेखाख्यं भवतीत्यर्थः ।
॥ ७० ॥

## ( ओम् गिरिधन्वने नमः )

गिरीति गीर् शब्दः सप्तम्यन्तः । धन्वन्-शब्दश्च मरुवाचकः प्रथमान्तः । तथा च असमस्तं पदद्वयमेकं नामेत्यभिप्रेत्याह —

**वाग्विषये त्वं मरुरिव भवसि त्वां हि मनागभिदधति न वाचो**
**दिव्यरथे वा पुरदहनविधौ वेदमयाः किल चतुरतुरङ्गः ।**
**चक्रयुगं ते दिनरजनिकरौ बाणशरीरभृदभवदुपेन्द्रो**
**मेरुरभूत्ते धनुरुरगपतिर्ज्याभवदीश तदसि गिरिधन्वा ॥ ७१ ॥**

---

[1] अनुग्रहार्थं (ख) [2] शिवभक्ति.... (क) [3] गर्भस्तु (ख) [4] स्मृत्यन्तराश्रयेण (ग)
[5] सूत्रम् (ग)

**वाग्विषय** इति । यतस्त्वं वाग्विषये मरुरिव निर्जलदेशविशेषवत् । मनोवाचामगोचरो भवसीत्यर्थः । "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति श्रुतेः । अथवा गिरिः सुमेरुः धन्वा धनुरात्मको यस्येति बहुव्रीहिः । पुरा हि त्रिपुरदहनावसरे दिव्यरथमधिरोहति परमशिवे सुमेर्वादीनां धनुराद्याकारेण स्वरूपाविर्भावः इत्यस्य तत्तत्पुराणादिषु स्पष्टं प्रतिपादितत्वात् इत्याशयेनाह— **दिव्यरथे** वेत्यादि । **चतुरतुरङ्गाः** मनोऽतीतवेगातिशयाः तुरङ्गमाः, ते च वेदमयाः वेदात्मकाः । किलेति [1]प्रसिद्ध्यर्थकमव्ययं सर्वत्रान्वेति । **दिनरजनिकरा**विति ।[2] दिनकरो रजनिकरश्चेति सूर्यसोमात्मकं रथचक्रद्वयमित्यर्थः । **बाणशरीरे**ति । बाणात्मकतया शरीरं बिभर्तीति तथा । उपेन्द्रो विष्णुः । **मेरुरिति** । [3]धन्वाकारेण मेरुरभूत् । **उरगपतिरिति** । धनुषः कोटिद्वयानुस्यूतसूत्रात्मना सर्पराडभवदित्यर्थः । तथा च—

> वेदाश्च *पुष्पवच्चक्रे शरोपेन्द्रे धनुर्गिरौ ।
> स्थित्वा रथे ददाहाशु त्रिपुरं त्रिपुरार्दनः ॥ इति ।

तदुक्तं लैङ्गे यथा —

> अथ रुद्रस्य देवस्य निर्मितो विश्वकर्मणा ।
> सर्वलोकमयो दिव्यो रथो यत्नेन सादरम् ॥
> सर्वभूतमयश्चैव सौवर्णः सर्वसम्मतः ।
> रथाङ्गं दक्षिणं सूर्यो वामाङ्गं सोम एव च ॥

---

[1] प्रसिद्ध्यर्थेऽव्ययम् (ग) [2] दिनरजनिकरश्चेति (ख,ग)

[3] 'धनुराकारेण' इत्येव साधुः । मेरुधन्वा इत्यत्र मेरुः धनुः यस्य इति विग्रहे धनुषश्च (५-४-१३२) इति सूत्रेणानङ् ।

*एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ इत्यमरः । पुष्पवन्तौ सूर्यचन्द्रौ चक्रे यस्य सः पुष्पवच्चक्रः, तस्मिन् इति विग्रहः ।

दक्षिणं द्वादशारं हि षोडशारं तथोत्तरम् ।
अरेषु तेषु विप्रेन्द्राः आदित्या द्वादशैव तु ॥
शशिनः षोडशारेषु कला [1]वामस्य सुव्रताः ॥ इति ।

[2]तथा—

इन्द्रियाणि मनश्चैव भूषणानि समन्ततः ।
श्रद्धा च गतिरस्याशु वेदास्तस्य हयाः स्मृताः ॥ इति ।[2]

एवं—

शैलेन्द्रः कार्मुकस्तस्य ज्या भुजङ्गाधिपः स्वयम् ।
कालरात्र्या तथैवेन्द्रधनुषा च परिवृता ॥
घण्टा सरस्वती देवी धनुषः श्रुतिरूपिणी ।
इषुर्विष्णुर्महातेजाः स्वयं कल्पितविग्रहः ॥
कालाग्निसदृशश्चैव साक्षात्तीक्ष्णः सुदारुणः ।
एवं कृतरथं दिव्यं कार्मुकं सशरं तथा ॥
सारथिं जगतां चैव ब्राह्मणं प्रभुरीश्वरः ।
आरुरोह रथं युक्तं रणमण्डनसंभ्रमः ॥ इति ।

इदं च तन्वीसंज्ञकं वृत्तम् । तथा च पैङ्गलं सूत्रम्—"तन्वी २तौ न्सौ भौ न्यौ द्विरादित्याः" । प्रतिपादं भगणः तगणः नगणः सगणः भगणद्वयं नगणो यगणश्चेति । द्वादशभिः द्वादशभिश्च यतिरित्येतद् वृत्तं तन्व्याख्यं भवतीत्यर्थः । [3]द्विरादित्य इत्यपहायेन्द्रियस्वरप्रसाद इति प्रतीत्या पठन्ति । अग्निपुराणे च तथैवोपबृंहणं दृश्यते । तत्पक्षेऽपि न प्रकृतश्लोके यतिभङ्गः ।[3] ॥ ७१ ॥

[1] वातस्य (ख) [2] नास्ति (ख,ग) [3] अयं भागः नास्ति (क)

## ( ओम् गिरिप्रियाय नमः )

गिरि वैदिकस्तुत्यात्मिकायां वाचि प्रियः अत्यन्तप्रीतिमान् । तथा च असमस्तं पदद्वयमेकं नाम । अथवा [1]गिरयः कैलासमेरुमन्दरादयः पर्वताः प्रियाः प्रीतिविषयाः यस्येति बहुव्रीहिः इत्यभिप्रेत्याह —

प्रेमभूरि ते विभाति वैदिकस्तवात्मवाचि ।
सर्वपर्वतेष्वपीति नामतो गिरिप्रियोऽसि ॥ ७२ ॥

प्रेमेत्यादि । वैदिकस्तवात्मिकायां वाचि मेरुमन्दराद्यात्मकपर्वतेषु च यतस्तव प्रीतिरधिका, अतस्त्वं नामतः गिरिप्रिय इति प्रसिद्धो भवसीत्यर्थः । समानीसंज्ञकं वृत्तमिदम् । तथा च पैङ्गलं[2] सूत्रम्— "ग्लिति समानी" । प्रतिपादमष्टाक्षरेषु विषमाक्षराणि गुरुणि समाक्षराणि च लघूनि यत्र भवन्ति, तत्समानीसंज्ञकं वृत्तं भवतीत्यर्थः । ॥ ७२ ॥

[3]नव्यमतेऽस्य सूत्रस्य गद्यपरत्वेऽपि **गरुडपुराणो**क्तलक्षणमिह सङ्गमनीयम् ।[3]

कृत्तिवासाः पुरारातिः भगवान् प्रमथाधिपः ।
मृत्युञ्जयः सूक्ष्मतनुः जगद्व्यापी जगद्गुरुः ॥

एतन्नामाष्टकं निर्वक्ति—**वाराणस्यामित्यादिना** ।

## ( ओम् कृत्तिवाससे नमः )

कृत्तिः गजचर्म व्याघ्रचर्म वा वासो वसनं यस्येति कृत्तिवासाः । तदेव दर्शयति वाराणस्यामित्यादिना ।

वाराणस्यां शिव त्वद्भक्तांस्तुदन्तं गजेन्द्रं
विप्रोत्सृष्टाभिचारव्याघ्रं च शूलेन हत्वा ।

---

[1] नास्ति (ग) [2] नास्ति (ग) [3] नास्ति (क)

चर्मद्वन्द्वं तदीयं प्रावृत्य विभ्राजमानो-
स्येकाम्रे चन्द्रलेखामौले ततः कृतिवासाः ॥ ७३ ॥

पुरा ह्यानन्दकाननावासान् शिवभक्तान् प्रपीडितुमाविर्भूतं गजाकार-मसुरं तथा दारुकावनगतमुनिकृताभिचारोत्पादितं घोराकृतिं व्याघ्रं च शूलेन हत्वा तदीयं चर्मद्वयमपि परिधाय विशेषेण प्रकाशमानः परमशिव इत्यर्थः । तथा चोक्तं **स्कान्दे**—

वाराणस्यां पुरा यातो गजरूपो महासुरः ।
तापसान् शिवभक्तांश्च निहन्तुं कोपदीपितः ॥

इत्युपक्रम्य —

हत्वा तं कुञ्जरं भीममधृष्यं दिग्गजैरपि ।
पादहस्तगतं चर्म विशस्याच्छिद्य तेन वै ॥
प्रावृत्यात्मानमात्मेशः स्तूयमानोऽखिलैः सुरैः । इति ।

तथा —

ततो व्याघ्रो महाक्रुद्ध आजगाम नखायुधः ।
तेषाम् ऋषीणां मर्मस्थकोपोऽयं निर्गतो यथा ॥
तं चादाय त्वचं भित्त्वा तथा चर्माम्बरोऽभवत् ।
शुशुभे चर्मणा तेन नानावर्णयुतेन च ॥ इति ।

तुदन्तं पीडयन्तम् । **एकाम्रेति** क्षेत्रविशेषः । “ एकाम्रे कृत्ति-वाससम् ” इति परमशिवाष्टषष्टिक्षेत्रमध्यपरिगणनात् । **चन्द्रलेखामौले** इति संबुद्धिः । शिष्टं स्पष्टार्थम् । [1]इदं च श्रुतिप्रसिद्धं[1] नाम । “ प्राणेश्वरः

---

[1] श्रुतिसिद्धं (ग)

कृत्तिवासाः पिनाकी " इति । चन्द्रलेखाख्यं वृत्तमिदम् । तथा च पैङ्गला आहुः— " म्रौ म्यौ यान्तौ भवेतां सप्ताष्टभिश्चन्द्रलेखा " । प्रतिपादं मगणः रगणः मगणः यगणद्वयं च सप्तभिरष्टभिश्च प्रतिपादं यतिरित्येतद् वृत्तं चन्द्रलेखाख्यं भवतीत्यर्थः । ॥ ७३ ॥

## ( ओम् पुरारातये नमः )

पुरा आदौ राति आदत्ते प्रकाशते इति पुरारातिः । [1]पुरा प्रथमकालिकी रातिर्यस्येति विग्रहः[1] आदानस्य प्रकाशनस्वरूपत्वात् । " तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति " इति श्रुतेः ।

" यच्चन्द्रमसि यच्चाग्नौ
तत्तेजो विद्धि मामकम् "

इत्यादिस्मृतेश्च इत्यभिप्रेत्याह —

**भवान् पूर्वमाभाति चन्द्रादिकात्**
**त्रयाणां पुराणामारातिश्च वा ।**
**मुनीनां पुराणां मघोवास्ति वा (?)**
**ततस्त्वं पुरारातिनामासि वै ॥ ७४ ॥***

§भवान् पूर्वमाभाति पश्चादिदं जगद् भाति यद्वा पुराणामरिः ।
तनोः कारणस्थूलसूक्ष्मात्मनो विनाशेन वा ते पुरारातिता ॥

**भवान् पूर्वमिति ।** स्व[2]त्प्रकाशाधीन[2]प्रकाशविषयभूतमिदं जगदित्यर्थः । अथवा पुराणां काञ्चनराजतलोहमयानां पूर्वोपदर्शितनगरविशेषाणां स्थूलसूक्ष्मकारणात्मकशरीरविशेषाणां वा अरातिर्नाशक इति पुरारातिरित्यभि-

---

[1] नास्ति (ख) [2] नास्ति (ग) * अयं कपुस्तकपाठः

§ अयं ख-गयोः दृश्यमानः व्याख्यातृसम्मतश्च पाठः ।

प्रेत्याह—यद्वेति । स्पष्टोऽर्थः । मन्दाकिनीसंज्ञकं वृत्तमिदम् । [1]तथा चोक्तमभियुक्तैः[1]—त्रिभिर्यैर्लगाभ्यां च मन्दाकिनी । प्रतिपादं यगणत्रयं लघुर्गुरुश्चेत्येतद् वृत्तं मन्दाकिनीसंज्ञकं भवतीत्यर्थः । ॥ ७४ ॥

(ओम् भगवते नमः)

भगोऽस्यास्तीति भगवान् इत्यत्र भगपदार्थमुपवर्णयति —

**पराक्रममती विरागयशसी**
**श्रिया सह जगत्पतित्वमिति षट् ।**
**गुणा भगपदोदितास्त्वयि वस-**
**न्त्यतः श्रुतिगिरेरितोऽसि भगवान् ॥ ७५ ॥**

**पराक्रमेत्यादि** । पराक्रमश्च मतिश्चेति द्वन्द्वः । विरागश्च यशश्चेत्यापि द्वन्द्वः । नासिकास्तनयोः (३-२-२९) नाडीमुष्ट्योः (३-२-३०) इति निर्देशेन अल्पाच्तरघिसंज्ञकयोः [2]पूर्वनिपातस्यानित्यत्वात् । श्रीयुक्तं जगत्पतित्वं चेति षट् गुणाः भगपदप्रतिपाद्याः, ते चास्मिन् सन्तीति भगवान् । तत्र च पराक्रमो वीर्यम् । तच्च शरभभैरववीर[3]भद्राद्यवतारेषु[3] प्रसिद्धम् । "क्षयद्वीराय प्रभरामहे मतिम्" [4]इत्यादि श्रुतिप्रसिद्धम्[4] । मतिः यावद्वस्तुविषयकं ज्ञानम् । तथा च श्रुतिः—"यः सर्वज्ञः स सर्ववित्, यस्य ज्ञानमयं तपः" इति ।

विरागः सर्वत्रौदासीन्यम् । तच्च —

"न तस्य कार्यं करणं च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते"

---

[1] नास्ति (ग) [2] इति पूर्वनिपातस्यानित्यत्वात् (ग) [3] भद्राद्यवतारादिषु (क)
[4] श्रुतिसिद्धम् (ग)

इत्यादि श्रुतिप्रसिद्धम् । यशः कीर्तिः, सकलजनस्तुतिविषयत्वमिति यावत् । तथा च श्रुतिः—" नमः श्लोक्याय चावसान्याय च " इति ।

" तस्य नाम महद्यशः " इति भारतेऽपि —

यं विष्णू रुद्रः शम्भुश्च ब्रह्मा लोकपितामहः ।
स्तुवन्ति विविधैः स्तोत्रैः देवदेवं महेश्वरम् ॥
तमर्चयन्ति ये शश्वद् दुर्गाण्यतितरन्ति ते । इत्यादि ।

श्रीः उमा, तद्वत्त्वं च—

" उमासहायं परमेश्वरं प्रभुम् ।" इति

श्रुतिसिद्धम् । जगत्पतित्वं सर्वैश्वर्यसंपत्तिः । [1]सर्वेश्वरः शम्भुराकाशमध्य इति श्रुतेः । एवं प्रमाणसिद्धाः षड्गुणाः । तथा चोक्तम्[1]

[2]विष्णुपुराणे—

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ इति ।

जलोद्धतगत्याख्यं वृत्तमिदम् । [3]तथा चोक्तं पैङ्गले[3]—" जलोद्धतगतिः ज्सौ ज्सौ रसर्तवः " प्रतिपादं जगणः सगणः जगणः सगणश्च, षड्भिश्च षड्भिश्च यतिरित्येतद् वृत्तं जलोद्धतगतिसंज्ञकं भवतीत्यर्थः ॥ ७५ ॥

## ( ओम् प्रमथाधिपाय नमः )

प्रकर्षेण मश्नन्ति उन्मूलयन्त्यवैदिकान् वेदविरुद्धाचारयुक्तान् इति प्रमथाः । तेषामपि अधिपः पालक इति प्रमथाधिप इत्यभिप्रेत्याह —

---

[1] नास्ति (क) [2] नास्ति (क,ग) [3] सूत्रात् (ग)

मश्नन्तितरां यद्वैदिकां-
स्त्वत्पारिषदाः प्रमथा मताः ।
तान् ईश सदा परिपालयन्
भक्तैरुदितः प्रमथाधिपः ॥ ७६ ॥

मश्नन्तीत्यादि । तरामिति तिङन्तात् घादाम्, [1]अपदार्थप्रकर्षद्योतक-मव्ययम् । पारिषदाः गणविशेषाः । तान् पारिषदान् सदा परिपालयन्निति ।

तथा चोक्तं **सौप्तिके** —

मनोवाक्कर्मभिर्भक्तान् पाति पुत्रानिवौरसान् ।
पिबन्त्यसृग्वसां चान्ये क्रुद्धा ब्रह्मद्विषां सदा ॥ इति ।

इदं चोपस्थिताख्यं वृत्तम् । [2]तथा च पैङ्गलं सूत्रम्[2]— उपस्थिता तजौग् । प्रतिपादं तगणः जगणद्वयं गुरुश्चेत्येतद् [3]वृत्तमुपस्थितासंज्ञं भव-तीत्यर्थः ॥ ॥ ७६ ॥

(ओम् मृत्युञ्जयाय नमः)

रुद्राच्युतेशब्रह्मणां कोटयो यया गीर्णाः क्षणात् ।
तद्गोचरो न त्वं विभो तेनाभवो मृत्युञ्जयः ॥ ७७ ॥

मृत्युर्मृतिस्तां जयति स्वविषयकोपासनया स्वभक्तानां मृतिं निवारय-तीति मृत्युञ्जयः । रुद्रेत्यादि । ब्रह्मविष्णुरुद्रेश्वराणां कालनिर्णयस्य प्रागेव सदाशिव इति नामनिर्वचने प्रदर्शितत्वान्नेह तत्प्रपञ्च्यते । ते च ब्रह्मादयः प्रतिकल्पं भिद्यमानाः कोटिसंख्याका अपि यया मृत्या क्षणमात्रादेव गीर्णाः क्षीणगतिं प्राप्ताः । विनष्टा इति यावत् । तथापि त्वं न तद्गोचरः न मृत्युविषयः ।

---

[1] पदार्थ (ख,ग) [2] पैङ्गलेन प्रतिपादितम् (ग) [3] उपस्थिताख्यं (ग)

" यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥"

इति श्रुतेः । अतस्त्वं मृत्युञ्जय इति नाम्ना प्रसिद्धो भवसीत्यर्थः । अभव इति जन्मराहित्यपरं मृत्यभावसाधनाय, जन्मनो मृतिव्यापकत्वात् । लङ्मध्यमपुरुषो वा । [1]स्पष्टार्थमन्यत् । मृत्युञ्जयाख्यं वृत्तमिदम् । तदुक्तमभियुक्तैः—तो मो लगौ मृत्युञ्जयः । प्रतिपादं तगणः, मगणः, लघुर्गुरुश्च इत्येतद् वृत्तं मृत्युञ्जयाख्यं भवतीत्यर्थः । ॥ ७७ ॥

## (ओम् सूक्ष्मतनवे नमः)

सूक्ष्मा तनुर्मूर्तिर्यस्येति सूक्ष्मतनुः । सूक्ष्मत्वं मूर्तौ दुर्ज्ञेयत्वमित्यभिप्रेत्याह—

**दुर्ज्ञेयमूर्तिधरोऽप्याम्रातके प्रकटः ।**
**सूक्ष्मादपीश तनुस्तेनासि सूक्ष्मतनुः ॥ ७८ ॥**

**दुर्ज्ञेयमूर्तीति** । आम्रातक इति क्षेत्रविशेषः । तत्र भक्तानुग्रहार्थं नामरूपाभ्यां पुनः प्रकटो भवसीत्यर्थः । [2]अत एव[2] मूर्तिः दुर्ज्ञेयेत्यर्थः । अथवा सूक्ष्मादपि तनुः सूक्ष्मः । तनुशब्दस्य कृशवाचित्वात् दुर्ज्ञेयस्वरूप इत्यर्थ इत्यभिप्रेत्याह—**सूक्ष्मादपीति** । तथा च श्रुतिः —

सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये घृतात् परं मण्डमिवातिसूक्ष्मम् ।

तथा —

सूक्ष्मात् सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत् । इति ।

**चूडामण्याख्यं** वृत्तमिदम् । [3]तथा च पैङ्गलैरुक्तम्[3]—चूडामणिस्तभगाः । प्रतिपादं तगणः भगणः [4]गुरुश्चेत्येतद् वृत्तं चूडामण्याख्यं भवतीत्यर्थः[4] । ॥ ७८ ॥

---

[1] स्पष्टमन्यत्(ग) [2] अतस्तव(ख) [3] पैङ्गलसूत्रम्(ग) [4] गुरुश्चेतच्चूडामणीत्यर्थः(ग)

## ( ओम् जगद्व्यापिने नमः )

जगत् समष्टिव्यष्ट्यात्मकप्रपञ्चजातं व्याप्तुं शीलमस्यास्तीति जगद्-व्यापी इत्याशयेनाह —

**सत्ताभानं प्रियमिति चानुस्यूतं**
**सर्वेष्वर्थेष्वनुभवसिद्धं लोके ।**
**सच्चित्सौख्यत्रयमपि यौष्माकीणं**
**रूपं तस्माद् भवसि जगद्व्यापी ॥ ७९ ॥**

**सत्ताभानमित्यादि** । सत्ता सत्स्वरूपं, भानं ज्ञानस्वरूपं प्रियं सुख-स्वरूपं चेत्यंशत्रयमप्यनुस्यूतमापामरसाधारणाखिललोकानुभवसिद्धं च । सच्चि-त्सौख्यात्मकं तत्त्रितयमपि यौष्माकीणं परमशिवस्वरूपानपायिभूतम् । तदुक्तमन्यत्र—

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥ इति ।

तथा चांशत्रयात्मकप्रपञ्चस्वरूपत्वात् परमशिवस्य जगद्व्यापित्वं सुकरमेवेति भावः । तथा च श्रुतिः —

सर्वव्यापी च भगवान् तस्मात्सर्वगतः शिवः । इति ।

जलधरमालाख्यं वृत्तमिदम् । तदुक्तमभियुक्तैः—अब्ध्यङ्गैः स्याज्जल-धरमाला म्भौ स्मौ । प्रतिपादं मगणः भगणः, सगणः मगणः चतुर्भिरष्ट-भिश्च यतिरित्येतद्वृत्तं जलधरमालाख्यं भवतीत्यर्थः । ॥ ७९ ॥

## ( ओम् जगद्गुरवे नमः )

जगतां ब्रह्माद्यखिलसुरमुनिगणानां गुरुः आद्यब्रह्मविद्योपदेष्टा इति जगद्गुरुः । "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुतेः । तदेवोपदर्शयति वटतविंत्यादिना —

**वटतरुनिकटे मुनीनखिलान् सुरान्**
**कमलभवमुखान् प्रबोधनमुद्रया ।**
**उपदिशसि परं महस्तव**
**दक्षिणामुख परशिव तन्मतोऽसि जगद्गुरुः ॥ ८० ॥**

वटविटपिनिकटोपगतान् कमलभवप्रभृत्यखिलसुरगणान् मुनिगणांश्च प्रबोधनमुद्रया चिन्मुद्रापरनाम्न्या उपदिशसि । [1]किन्तदुपदेशनमित्याकाङ्क्षायामाह—[2]परं मह इति । तवेत्यभेदार्थिका षष्ठी । त्वदभिन्नं महः । तथा च सच्चिदानन्दात्मकं यत्परंज्योतिःस्वरूपं परमशिवतत्त्वं, तदुप[3]देशनेन अविद्यायाः परं पारं तारयसीत्यर्थः । दक्षिणामुखश्चासौ परशिवश्चेति सम्बुद्धिः । [4]शिष्टमन्यत् स्पष्टम्[4] । अपराजिताख्यं वृत्तमिदम् । [5]तथा च पैङ्गलसूत्रम्[5]—अपराजिता नौ सौ लगौ स्वरऋषयः । प्रतिपादं नगणद्वयं रगणः सगणश्च लघुर्गुरुश्चेतद्[6]वृत्तमपराजिताख्यं भवतीत्यर्थः । ॥ ८० ॥

व्योमकेशो महासेनजनकश्चारुविक्रमः ।
रुद्रो भूतपतिः स्थाणुः अहिर्बुध्न्यो दिगम्बरः ॥
अष्टावेतानि नामानि निर्वक्ति पृथ्वीत्यादिना ।

## (ओम् व्योमकेशाय नमः)

व्योमैव व्योमकं, स्वार्थे कप्रत्ययः । तस्येशो व्योमकेश इत्यभिप्रेत्याह ।

**पृथ्वीपाथोज्वलनपवनव्योमरूपेषु भूते-**
**ष्वल्पाल्पानि प्रथमगदितान्युत्तराणीशितॄणि ।**
**व्योम्नोऽपीशोऽस्यथ च गगनं कुन्तलास्ते विराजो-**
**गङ्गाधारा वियदिव जटास्तेन च व्योमकेशः ॥ ८१ ॥**

---

[1] किं तदुपदेशनं कतममित्या.... (ग) [2] परमस्व इति (ख) [3] देशेन (ख)
[4] शिष्टं स्पष्टम् (ग) [5] पैङ्गले (ग) [6] अपराख्यं (ग)

**पृथ्वीत्यादि** । पृथिव्यप्तेजोवाय्वाकाशात्मकेषु भूतेषु मध्ये प्रथम-गदितानि आकाशादितः पूर्वपूर्वोक्तानि वाय्वादीनि अल्पाल्पानि आकाशापे-क्षया वायुः, तदपेक्षया तेजः, तदपेक्षया पाथः, तदपेक्षया पृथिवीति उत्तरोत्त-रापेक्षया पूर्वपूर्वाण्यल्पाल्पानि [1]व्याप्यानि । अभिभाव्यानीति यावत् । एतेन उपदर्शितार्थान्वयवैपरीत्ये सति पृथिव्यादितः आकाशादीनि पूर्वपूर्वापेक्षया उत्तरोत्तराणि ईशितॄणि इत्यपि व्याख्यातम् । ईशितॄणि व्यापकानि अभि-भावकानि इति यावत् । तथा च पृथिव्यादीनामाकाशादितः उत्पत्तेः श्रुति-बोधितत्वेन कार्याणां च कारणेषु विलयनार्थं पूर्वपूर्वाणि अल्पाल्पानि, उत्त-रोत्तराणीशितॄणि इत्युक्तिर्युक्तियुक्तेति भावः । तथा च श्रुतिः—

आत्मन आकाशः संभूतः ।
आकाशाद् वायुः । वायोरग्निः ।
अग्नेरापः । अद्भ्यः पृथिवी ॥ इति ।[2]

**व्योम्नोऽपीति** । ईशः व्यापकः । [3]व्योम्नोऽपीति अपिना पूर्वपूर्वाणां[3] सर्वेषामपि विलयाधिष्ठातृत्वेन सर्वव्यापक इत्युक्तं भवति ।

" यतो वा इमानि भूतानि जायन्ते
येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्तीति "
" सर्वव्यापी च भगवान्
तस्मात् सर्वगतः शिवः " इत्यादिश्रुतेः,
" मयि सर्वं लयं याति मत्तः सर्वं प्रवर्तते" इत्यादि [4]स्मृतेश्चेति ।

अथवा व्योमैव केशो व्योमकेश इत्यभिप्रायेणाह—**अथ चेति** । अथवेत्यर्थः । कुन्तलाः केशसमूहाः विराजः विराड्रूपस्य परम[5]शिव-

---

[1] नास्ति (ग) [2] इत्यादि (ग) [3] व्योम्नोऽपीत्यादिना पूर्वपूर्वेषाम् (ग)
[4] श्रुतेश्चेति (ख,ग) [5] शिवेत्यर्थः (ख)

स्येत्यर्थः । अथवा केशशब्दो जटावाची । व्योमवत् विस्तृताः केशाः जटाः यस्येति व्योमकेशः । जटानां च व्योमवद् विस्तरणं सफलीकर्तुमुक्तं **गङ्गाधारा** इति जटानां विशेषणम् । गङ्गायाः [1]आधारभूता इत्यर्थ इति । मन्दाक्रान्ताख्यं वृत्तमिदम् । तथा च पैङ्गलसूत्रम्—मन्दाक्रान्ता म्भौ न्तौ त्गौग् समुद्रऋतुस्वराः । प्रतिपादं मगणः भगणः नगण तगणद्वयं गुरुद्वयं चेत्येतद् वृत्तं मन्दाक्रान्ताख्यं भवतीत्यर्थः । ॥ ८१ ॥

## ( ओम् महासेनजनकाय नमः )

[2]महासेनस्य जनकः महासेनजनकः ।[2] कुमारसंहितोक्तां कथां संगृह्णाति **सुब्रह्मण्येनेति** ।

**सुब्रह्मण्येन पृष्टे प्रणवपरमार्थोऽत्र क इति**
**ब्रह्मण्यब्जेक्षणे स्वं दिशति सति कारानियमिते ।**
**आत्मा वै पुत्रनामेत्युपदिशति तौ मोचितवति**
**त्वय्यब्जाक्षाजपुत्रैः स्तुत इति महासेनजनकः ॥ ८२ ॥**

सुब्रह्मण्येन स्कन्देन प्रणवपरमार्थः, प्रणवस्य सकलवेदसारात्मकस्य ओङ्कारस्य परमार्थः अभिप्रायविषयीभूतार्थः* । ब्रह्मणि [3]कमलासने अब्जेक्षणे विष्णौ स्वं दिशति, अहमेव प्रणवपरमार्थ इति स्वस्यैव प्रणवार्थत्वे उपदिशति सति, कारानियमिते अहमहमित्यविद्याकुलितचेतोव्यापाराविष्टाविमाविति कारागृहे [4]पातिते । **आत्मेत्यादि** । अपरिमितानन्दस्वरूपः परंज्योतिः परमात्मैव ओङ्कारगम्यः । [5]स च त्वमेव,[5] आत्मा वै पुत्र नामेति श्रुतेः । इत्येवं बहुमन्यमानोपदेशेन कारागृहनियमनात् ब्रह्मविष्णू मोचितवति

---

[1] आधारभूतायाः (ख,ग) [2] नास्ति (ग) [3] कमलोद्भवे (ख,ग)
[4] नियमिते (ग) [5] स त्वमेवात्मा (ग)
*अत्र क इति पृष्टे सति इत्यस्य स्पष्टार्थत्वात् प्रायः न कृता व्याख्या ।

त्वयि परमशिवे अब्जाक्षाजपुत्रैः अब्जाक्षो विष्णुः, अजो ब्रह्मा, पुत्रः स्कन्दः। तैः। **स्तुत** इति। तथा च ब्रह्माद्यखिलसुरगणैः कामं स्तुतत्वात् महासेनजनक इति लोके प्रसिद्धो भवसीत्यर्थः।

महासेनाख्यं वृत्तमिदम्। तथा चोक्तमभियुक्तैः—म्रौ भ्नौ [1]त्सौ सप्तरुद्रैर्यतिरिति महासेन उदित इति। प्रतिपादं मगणः रगणः भगणः नगणः तगणः सगणश्च सप्तभिरेकादशभिश्च यतिरित्येतद्वृत्तं महासेनाख्यं भवतीत्यर्थः। ॥ ८२ ॥

( ओम् चारुविक्रमाय नमः )

चारुः मनोहरः विक्रमः पराक्रमो यस्येति तथा। तत्र पराक्रमे मनोहरत्वमुपदर्शयति —

> **परशिव त्वया ये निषूदिताः**
> **गजजलन्धरत्रैपुरादयः।**
> **अपुनरागमं ते पदं गता-**
> **[2]स्तव चमत्कृतश्चारुविक्रमः ॥ ८३ ॥**

**परशिवेत्यादि**। गजजलन्धरत्रैपुरादयो ये सुरविरोधिनः स्वकटाक्षनिरीक्षणादिलीलामात्रेण निषूदितास्तानेव पुनः परमैश्वर्यास्पदं स्वपदं प्रापितवान् इत्येतदेव चारुत्वं विक्रमस्येति भावः। अपुनरागमं पुनरागमशून्यं नित्यमिति यावत्। पदं गताः कैलासं प्राप्ताः। स्पष्टमन्यत्। कामदासंज्ञकं वृत्तम्। तथा चोक्तमभियुक्तैः—भवति नश्च रौ कामदा लगौ। प्रतिपादं नगणः, रगणद्वयं लघुर्गुरुश्च इत्येतद् वृत्तं कामदाख्यं भवतीत्यर्थः। प्राच्यवृत्त्यपरान्तिका वा। वैतालीयसमपादलक्षणवत्त्वात् चतुर्थपञ्चममात्रयोर्मेलनाच्च। ॥ ८३ ॥

---

[1] नास्ति (ख) [2] तवचनमत् (ख)

( ओम् रुद्राय नमः )

[1]रोदितीति रुद्रः, रोदनवान् इत्यर्थः इत्यभिप्रेत्याह —

**बालो धातृललाटाज्जातः सन्नरुदस्त्वं**
**सोऽरोदीद्यदरोदीदग्नित्वादपि रुद्रः ।**
**उल्लाघीकरणाद्वा निश्चिन्तीकरणाद्वा**
**संवर्ते रोदयसि ब्रह्मादीन् [2]इति रुद्रः ॥ ८४ ॥**

**बालेत्यादि ।** धातृललाटात् [3]ब्रह्मललाटात्[3] जातः आविर्भूतः । अरुद इति । ब्रह्मललाटाद् आविर्भूतस्य परमशिवस्य शैशवभावाभिव्यञ्जकं च रोदनं भारते शान्तिपर्वणि प्रपञ्चितं यथा—

ततस्त्वां विपुलां नीतिं पूर्वं जग्राह शङ्करः ।
बहुरूपो विशालाक्षः शिवः स्थाणुरुमापतिः ॥
अनादिनिधनो देवः चैतन्यादिसमन्वितः ।
ज्ञानानि च [4]वशे यस्य[4] तारकादीन्यशेषतः ॥
अणिमादिगुणोपेतमैश्वर्यं न च कृत्रिमम् ।
तुष्ट्यर्थं ब्रह्मणः पुत्रो ललाटदुत्थितः स्वयम ॥
अरुदत् सुस्वरं घोरं जगतः प्रभुरव्ययः । इति ।

अथवा अग्निस्वरूपत्वाद्वा रुद्रपदप्रतिपाद्यत्वं परमशिवस्येत्याह — **अग्नित्वादपीति ।** अग्नेः रोदनशालित्वे किं प्रमाणम् ? इत्याकांक्षायां श्रुतिं तत्र प्रमाणयति— [5]सोऽरोदीदिति[5] ।

" सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम् ।" इति ।

---

[1] रोदयतीति (क) [2] अपि (ग) [3] नास्ति (ख) [4] चरो (ख) [5] नास्ति (ग)

तथा चोक्तं **शिवपुराणे**—

> बहिरन्तर्जगद्विश्वं प्राप्य तेजोमयी शुभा ।
> रौद्री रुद्राभिधा [1]मूर्तिरुत्थिता घोररूपिणी ॥ इति ।

अग्न्यधिष्ठात्र्याः रुद्रमूर्तेरग्न्यात्मकत्वस्य तत्रैव स्पष्टं प्रपञ्चितत्वात् नेह तद् विविच्यते । अथवा रुजं रोगं द्रावयति नाशयतीति रुद्रः, रोग-निवर्तक इत्याशयेनाह— **उल्लाघीकरणादिति** । शरीरादिरोगनिवर्तनद्वारा आरोग्यसंपादनलक्षणमुल्लाघीकरणम् । एतेन—

> आरोग्यं भास्करादिच्छे[2]दन्नमिच्छेध्दुताशनात् ।
> ज्ञानं महेश्वरादिच्छेन्मुक्तिमिच्छेज्जनार्दनात् ॥

इत्यादिप्रमाणबलात् सूर्यात्मकत्वं परमशिवस्येत्युक्तं भवति ।

तदुक्तं लैङ्गे उपरिभागे—

> सूर्यात्मा भगवान् देवः सर्वदेवविभूतिदः ।
> रुद्र इत्युच्यते देवैः भगवान् भक्तिमुक्तिदः ॥

अथवा रुत् दुःखम् । तद्धेतुभूतमज्ञानं द्रावयतीति रुद्रः इत्यभि-प्रेत्याह—**निश्चिन्तीकरणादिति** । तदुक्तं **वायवीयसंहितायाम्**—

> रुद्दुःखं दुःखहेतुर्वा तद् द्रावयति यः प्रभुः ।
> रुद्र इत्युच्यते तस्मात् शिवः परमकारणम् ॥ इति ।

निश्चिन्तीकरणं च दुःखस्य तद्धेतोरज्ञानस्य वा निराकरणेन चित्तैकाग्र्य-संपादनलक्षणम्, अज्ञानकार्यत्वाच्चिन्तायाः इति भावः । अथवा रोदयति

---

[1] मूर्तिरास्थिता (ख) [2] धनमिच्छेद्धुताशनात् (ख,ग)

अन्तकाले ब्रह्मादीन् इति तथेत्याह—**संवर्ते रोदयतीति** । स्पष्टोऽर्थः । इदं च श्रुतिप्रसिद्धं नाम ।

"नमस्ते रुद्र मन्यव उतोत इषवे नमः ।"
"यो रुद्रो अग्नौ"
"सर्वो ह्येष रुद्रः" इत्यादि ।

अलोलाख्यं वृत्तमिदम् । [1]तथा चोक्तमभियुक्तैः[1]—द्विः सप्तच्छिद-लोला म्सौ म्भौ गौ चरणे चेत् । प्रतिपादं मगणः सगणः [2]मगणः[2] भगणः गुरुद्वयं च । सप्तभिः सप्तभिश्च यतिरित्यलोलाख्यं वृत्तं [3]भवतीत्यर्थः ।
॥ ८४ ॥

## ( ओम् भूतपतये नमः )

भूतानां पृथिव्यादीनां जीवराशीनां वा पतिः नियामकः इत्यर्थः इत्यभिप्रायेणाह—

**धरणीजलादिषु तथात्मगणे-**
**ष्वनुविश्य तान्नियमयन्नटसि ।**
**अथवा पिशाचनिकरान्नटयन्**
**भुवनावनाय ननु भूतपतिः ॥ ८५ ॥**

**धरणीजलादिष्विति** । आदिपदात् तेजःप्रभृतीनां परिग्रहः । आत्मगणाः जीवराशयः । अनुविश्य अन्तः प्रविश्य । "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः ।

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
संपश्यन् ब्रह्म परमं याति [4]नान्येन[4] वर्त्मना ॥" इति श्रुतेश्च ।

---

[1] पैङ्गलसूत्रम् (ग) [2] नास्ति (ख) [3] भवति (ग) [4] तान्येव (क)

तान् धरण्यादीन् नियमयन् शिक्षयन् नटसि नटनपूर्वकं विहरसीत्यर्थः । अटसीति वा छेदः । अथवा भूताः [1]देवयोनिविशेषाः[1] पिशाचापरस्वरूपाः । "पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः" इत्यमरः । तेषां पतिः नाथः इति तथेत्याह—**अथवेति** । पिशाचनिकरान् पिशाचसमूहान् नटयन् नटनं कारयन् भुवनावनाय जगद्रक्षणाय । [2]तदुक्तं भारते उमामहेश्वर-संवादे देवीकृतश्मशानवासित्वनियामकप्रश्ने यथा—

मदन्येन न शक्यं हि निहन्तुं भूतजं भयम् ।
तत्रस्थोऽहं प्रजाः सर्वाः पालयामि दिने दिने ॥
मन्नियोगाद् भूतसंघाः न च घ्नन्तीह [3]कञ्चन ।
तांस्तु लोकहितार्थाय श्मशाने रमयाम्यहम् ॥ इति ।

स्पष्टमन्यत् । [4]प्रमिताक्षराख्यं वृत्तमिदम् । तथा च सूत्रं[4]— प्रमिताक्षरा स्जौ सौ । प्रतिपादं सगणः जगणः सगणद्वयं [5]चेत्येतद् वृत्तं प्रमिताक्षराख्यं[5] भवतीत्यर्थः । आर्यागीतिर्वा । "अर्धे वसुगण आर्यागीतिः" इति तल्लक्षणात् । ॥ ८५ ॥

## ( ओम् स्थाणवे नमः )

स्थाणुः शंकुमात्रावशेषो भुवो वृक्षः । तद्वत् सर्वत्राचञ्चलः सन् प्रकाशत इति परमशिवोऽपि स्थाणुपदप्रतिपाद्य इत्याह—

**वृक्षाभः स्तब्धो दिवि भुवि पुर उद्दिश्य**
**स्फारं वर्षाणि स्थिरतर उदतिष्ठस्त्वम् ।**
**ज्योतिर्लिंगेऽपि प्रभवति सति नैश्चल्यात्**
**कल्पान्ते वातैर्न चलसि तदसि स्थाणुः ॥ ८६ ॥**

---

[1] देवयोनयश्च (ग) [2] यदुक्तं (ग) [3] कञ्च (ग) [4] प्रतिमाक्षरं वृत्तमिदं सूत्रम् (ग)
[5] एतत् प्रमिताख्यम् (ग)

**वृक्षाभ** इति । **स्तब्ध** इति । दिवि भुवि च निश्चलतया स्थित इत्यर्थः । [1]तथा च श्रुतिः[1]—

" वृक्ष इव स्तब्धो दिवि तिष्ठत्येक-
स्तेनेदं [2]पूर्णं पुरुषेण सर्वम्[2] । इति ।

अथवा त्रिपुरविजयावसरे सज्जीकृतचापः सन् पुराणां क्रमयोगसमयं प्रतीक्ष्य निश्चलतया चिरकालं स्थितत्वात् स्थाणुपदप्रतिपाद्यत्वं परमेश्वरस्येत्याह —**पुर उद्दिश्येति** । पूर्शब्दो द्वितीयाबहुवचनान्तः । पुरत्रयमुद्दिश्येत्यर्थः । स्फारं यथा तथा वर्षाणि बहुवर्षाणि ।

तथा चोक्तं **भारते** द्रोणपर्वणि —

अतिष्ठत् स्थाणुभूतः सन् सहस्रपरिवत्सरान् ।
यदा त्रीणि समेतानि अन्तरिक्षे पुराणि वै ॥
[3]त्रिपर्वणा [4]त्रिशूलेन तदा तानि बिभेद सः ॥ इति ।

अथवा आपातालं व्याप्य महालिङ्गप्रादुर्भावावसरे ज्योतिर्लिङ्गात्मना निश्चलतया स्थितत्वात् तथेत्याह—**ज्योतिर्लिङ्गेऽपीति** । तदुक्तं **शैवागमे**—

नमोऽस्तु स्थाणुभूताय ज्योतिर्लिङ्गामृतात्मने ।
चतुर्मूर्ति [5]वपुःस्थाय भासिताङ्गाय शम्भवे ॥ इति ।

उपदर्शितव्युत्पत्तित्रयं च द्रोणपर्वणि [6]प्रदर्शितं यथा[6]—

दहत्यूर्ध्वं स्थितो यच्च स्थाणुवत्तस्थितं च यत् ।
स्थिरलिङ्गं च यन्नित्यं तस्मात् स्थाणुरिति स्मृतः ॥ इति ।

---

[1] तथैव (ग) [2] नास्ति (ग) [3] त्रिपर्वाणि (ग) [4] (त्रिशल्येन (क,ख)
[5] वपुस्थाय (ग) [6] नास्ति (ग)

स्थितः सन् ऊर्ध्वं विद्यमानं पुरत्रयं दहति । तत्स्थितं तावत्कालं चिरकालं स्थाणुवत्स्थित इत्यर्थः ।

**कल्पान्त** इति । सकलजगत्संक्षोभण[1]कालोत्थैः प्रचण्डवातैरप्यचलनाद्वा स्थाणुरित्यर्थ इति ।

इदं च असंबाधाख्यं वृत्तम् । [2]तथा च पैङ्गलं सूत्रम्[2]—असंबाधा म्तौ न्सौ गाविन्द्रियनवकौ । प्रतिपादं मगणः [3]तगणः नगणः सगणः [4]गुरुद्वयं च[4] । पञ्चभिर्नवभिश्च यतिरित्येतद् वृत्तं असम्बाधाख्यं भवतीत्यर्थः ।
॥ ८६ ॥

## ( ओम् अहये बुध्न्याय नमः )

बुध्नशब्दः मूलवाची । "मूलं बुध्नोऽङ्घ्रिनाम च" इत्यमरः । "तत्र साधुः" (८-८-९४) इति सूत्रेण बुध्नशब्दस्य यत्प्रत्यययोगात् बुध्न्यः ब्रह्माण्डमूलभूतपातालवर्तीति यावत् । स च सहस्रफणशाली शेषसंज्ञकः सर्पराडित्यर्थः । तथा च असमस्तं [5]पदद्वयमेकं नामेत्याह—

**ब्रह्माण्डस्याधो दशशतफणो बुध्नभावं प्रयाते**
**पाताले साधुर्वहति वसुधां सार्णवद्वीपशैलाम् ।**
**तन्मूर्धभ्योऽन्ते विषमयवपुः कालसङ्कर्षणाख्यो**
**रुद्रो भूत्वेदं दहसि निखिलं सोऽस्यहिर्बुध्न्यनामा ॥ ८७ ॥**

**ब्रह्माण्डस्येति** । दशशतफणः, सहस्रफणः शेषाख्यः सर्प इति यावत् । बुध्नभावं मूलभावं प्रयाते प्राप्ते पाताले साधुः पातालवर्तीति यावत् । बुध्न्यशब्दस्य यत्प्रत्ययबोधनार्थं "तत्र साधुः" इति सूत्रान्तर्गतैकदेशस्य

---

[1] कालेऽपि (ख), काले (ग) [2] सूत्रात् (ग) [3] मगणः (ख) [4] गुरुद्वयैः (ग)
[5] पदमेकं (ग)

साधुरित्यस्य प्रयोगः । **सार्णवद्वीपशैलाम्** । अर्णवद्वीपशैलादिभिः संमिलितां वसुधां वहति धारयतीत्यर्थः । [1]**तन्मूर्धभ्यः** । तस्य शेषाख्यस्य सर्पराजस्य मूर्धभ्यः फणेभ्यः । **विषमयवपुः** । विषप्रचुरशरीरः । इदं परिदृश्यमानं निखिलं जगत् दहसि उपसंहरसि इत्यर्थः ।[1] तथा चोक्तं **विष्णुपुराणे** द्वितीयोंऽशे यथा—

[2]पातालं नाम यत्रास्ते[2] विष्णोर्या तामसी तनुः ।
शेषाख्या तद्गुणं वक्तुं न शक्ता देवदानवाः ॥
कल्पान्ते यस्य वक्त्रेभ्यो [3]विषानलशिखोज्ज्वलः ।
संकर्षणात्मको रुद्रो निष्क्रम्यातिजगत्त्रयम् ॥ इति ।

कुसुमितलतावेल्लिताख्यं वृत्तमिदम् । तथा च पैङ्गलं सूत्रम्—"कुसुमितलतावेल्लिता म्तौ न्यौ याविन्द्रियर्तुस्वराः" प्रतिपादं मगणः तगणः नगणः यगणत्रयं च । पञ्चभिः षड्भिः सप्तभिश्च यतिरित्येतद् वृत्तं कुसुमितलतावेल्लिताख्यं भवतीत्यर्थः । ॥ ८७ ॥

## ( ओम् दिगम्बराय नमः )

**महेश दारुकावने महर्षिसिद्धसेविते**
**तदङ्गनाः पतिव्रताः परीक्षमाणया धिया ।**
**मनोभवातिशायिनीं मनोहरां दधत्तनू-**
**मुपागतस्तदाश्रमेषु भिक्षितुं दिगम्बरः ॥ ८८ ॥**

दिश एवाम्बराणि यस्येति दिगम्बरः । महेशेति संबुद्धिः । तदङ्गनाः ऋषिपत्नीः पतिव्रताः पतिशुश्रूषणैकबद्धव्रताः । प्रत्येकभावितदैवता इति यावत् । परीक्षमाणया धिया पातिव्रत्यशोधनार्थबुद्ध्या ।

---

[1] नास्ति (ग) [2] पाताळे नाम यश्चास्ते (क) [3] विषानल (ख)

**मनोभवातिशायिनीम्** । मनोभवस्य मन्मथस्य अपि अतिशायिनीं संमोहिकां मनोहरां हृद्याम् । तनुं मूर्तिमुपागतः प्राप्तः तदाश्रमेषु ऋष्याश्रमेषु भिक्षितुं भिक्षामटितुम् । **दिगम्बरः** इति । [1]तथा चोक्तं लैङ्गे[1]—

ततस्तेषां प्रसादार्थं भक्तानामनुकम्पया ।
देवः कृतयुगे पुण्ये पृष्ठे हिमवतः शुभे ॥
देवदारुवनं प्राप्तः प्रसन्नः परमेश्वरः ।
भस्मपाण्डुरदिग्धाङ्गो नग्नो विकृतलक्षणः ॥
उल्मुकासक्तहस्तश्च रक्तपिङ्गललोचनः ।
क्वचित् प्रहसते रौद्रं क्वचिज्जल्पति विस्मितः ॥
क्वचिन्नृत्यति शृङ्गारं क्वचिद् रौति मुहुर्मुहुः ।
आश्रमे ह्यटते [2]भैक्षं जायते च पुनः पुनः ॥
मायां कृत्वा तयारूपां देवस्तद्वनमागतः । इति ।

पञ्चचामराख्यं वृत्तमिदम् । [3]तदुक्तमभियुक्तैः[3] —

लगौ निरन्तरौ यदा तदा स पञ्चचामरः ॥ इति स्पष्टम् ।

॥ ८८ ॥

अष्टमूर्तिरनेकात्मा सात्त्विकः शुद्धविग्रहः ।
शाश्वतः खण्डपरशुरजः [4]पाशविमोचनः ॥
इत्यष्टौ नामानि निर्वक्ति—**मेदिनी**त्यादिना ।

## (ओम् अष्टमूर्तये नमः)

पृथिव्यादीनि पञ्च भूतानि चन्द्रार्कौ आत्मा दीक्षितो वेत्यष्टौ मूर्तयः शरीराणि यस्येति वा, मूर्तिशब्दस्य [5]मूर्तितत्परतया शर्वादिसंज्ञकाः अष्टौ

---

[1] लैङ्गेऽपि (ग) [2] भैक्ष्यं (ख,ग) [3] नास्ति (ग) [4] पाशविमोचकः (ग)
[5] मूर्तिपरतया (ग)

देवताः मूर्तिमत्यः यस्येति वा, अष्टमूर्तिः । पृथिव्याद्यष्टशरीरको वा तत्तदभिमानिशर्वाद्यष्टदेवतासमष्टिस्वरूपो वा इत्यर्थः इत्याशयेनाह—

मेदिनीं भूतमभिमन्यसे शर्व इति
पाथसो भवपदेनाभिमानी ।
रुद्रनाम्ना तु वैश्वानरस्योग्र इति
मारुतं भीम इत्यम्बरस्य ।
भानुमीशान इति शीतभानुं महा-
देव इत्यात्मनो यज्वनो वा ।
मन्यसे पशुपतीभूय शम्भो जगद्
व्याप्य तिष्ठन् भवस्यष्टमूर्तिः ॥ ८९ ॥

**मेदिनीमि**त्यादि । पञ्चभूतानां मध्ये पृथिव्यात्मकं भूतं शर्व इति नाम्ना अभिमन्यसे, अभिमानवान् भवसि । **पाथसः** जलस्य विभक्ति-परिणतस्य भूतपदस्योत्तरत्रापि यथायोग्यमन्वयः । तथा च जलात्मकस्य भूतस्य भवपदेनाभिमानीत्यर्थः । वैश्वानरस्य तेजआत्मकस्य भूतस्य । रुद्र इति नाम्ना [1]अभिमानीति सम्बन्धः । **मारुतमिति** । वाय्वात्मकं [2]भूतमुग्र इति नाम्ना अभिमन्यसे इति पूर्वेण सम्बन्धः । **अम्बरस्य** । आकाशात्मकस्य भूतस्य भीम इति नाम्ना अभिमानीत्यर्थः । भानुरर्कः, तमीशान इति नाम्ना अभिमन्यसे । शीतभानुश्चन्द्रः, तं महादेव इति नाम्ना अभिमन्यसे । आत्मनो यज्वनो वेति विकल्पः । **पशुपतीभूयेति** । पशुपतिरिति नाम्ना क्षेत्रज्ञान् दीक्षितान् वा अभिमन्यसे इत्यर्थः । **जगद्-व्याप्येति** । तथा चोक्तं **वायुसंहितायाम्**—

---

[1] अभिमानीत्यर्थः (ग) [2] मूलमार्ग (क)

तस्य देवादिदेवस्य मूर्त्यष्टकमिदं जगत् ।
भूम्यम्भोग्निपवन्द्व्योमक्षेत्रज्ञार्कनिशाकराः ॥
अधिष्ठिता महेशस्य शर्वाद्याभिश्च मूर्तिभिः ।
चराचरात्मकं विश्वं धत्ते विश्वम्भरात्मना ॥ इति ।

तथा लैङ्गेऽपि —

अष्टमूर्तिर्जगद् व्याप्य स्थितोऽयं परमेश्वरः ।
चराचराणां भूतानां धाता विश्वम्भरात्मकः ॥
भवश्चेत्युच्यते देवैर्भगवान् वेदवादिभिः ॥ इति ।

आन्दोलिकाख्यं वृत्तमिदम् । [1]तदुक्तमभियुक्तैः[1] —

सप्तभिः प्रहरणैः संयुतान्तिमगुरुः
त्रिदशसु यतियुतान्दोलिकोक्ता ।

प्रहरणं [2]पञ्चमात्रो[2] गणः । "आयुधवाचकशब्दः पञ्चकलानां भवेत्संज्ञा" इति **प्राकृतसूत्रे वाणीभूषणादौ** च परिभाषितत्वात् । तथा च प्रतिपादं [3]सप्तत्रिंशत्संख्याकाः मात्राः[3] दशभिर्दशभिः [4]दशभिः[4] सप्तभिश्चेति यतिरित्येतद् वृत्तमान्दोलिकाख्यं भवतीत्यर्थः । अत्र च [5]सप्तमात्रात्मिकायाः[5] चरमयतेः पादान्तिमत्वेन तत्प्राप्तेरार्थिकत्वात् तदुपेक्ष्य त्रिदशभिर्यतिरित्युक्तमित्यवधेयम् । ॥ ८९ ॥

## ( ओम् अनेकात्मने नमः )

अनेकः आत्मा वस्तुस्वरूपं जीवो वा यस्येत्यनेकात्मा अखिलप्रपञ्चात्मको वेति क्रमेण दर्शयति यत्किञ्चिदित्यादिना —

---

[1] सूत्रम् (ग) [2] नाम पञ्चमात्रको (ग) [3] सप्तत्रिंशन्मात्राः (ग)
[4] नास्ति (क,ख) [5] सप्तमात्रकायाः (ग)

**यत्किञ्चिद् ब्रह्माण्डे सर्वो वै रुद्रस्तत् ।**
**संख्येयत्ताभावाद् विख्यातोऽनेकात्मा ॥ ९० ॥**

यत्किञ्चिच्छब्दो यावत्परः । "यत्किञ्चित्प्राचीनमग्नीषोमीयादि" इत्यादौ तथा व्याख्यानात् । [1]तथा च[1] दृश्यादृश्यात्मकं यावद् वस्तुजातं तत्सर्वं रुद्रात्मकमेवेत्यर्थः । [2]तथा च श्रुतिः[2] —

"विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् ।
सर्वो ह्येष रुद्र[3]स्तस्मै रुद्राय नमो अस्तु ॥[3] इति ।

अथवा एकद्वित्रित्वादिभिः परिगणितुमशक्यत्वात्तथेत्येतद्दर्शयति — **संख्येयत्ताभावादिति** । संख्याया अवध्यभावादित्यर्थः ।

"असंख्याताः सहस्राणि ये रुद्राः अधिभूम्याम्" इति श्रुतेः ।

स्पष्टमन्यत् । शेषाख्यं वृत्तमिदम् । तदुक्तमन्यत्र— "मद्वन्द्वं शेषाख्यम्" इति । प्रतिपादं मगणद्वयं यत्र भवति तत् शेषाख्यं वृत्तं भवतीत्यर्थः । ॥ ९० ॥

## ( ओम् सात्त्विकाय नमः )

सत्त्वान्यस्मिन्निति सात्त्विकः । तदस्य "प्रयोजनम्" (५-१-१०९) इति प्रयोजनार्थकः ठक्प्रत्ययः इत्यत्र सत्त्वपदार्थमादौ दर्शयन् प्रत्ययप्राप्यार्थमप्याह—**त्वयि निवसतीत्यादिना** ।

**त्वयि निवसति जन्तुरस्तिता-**
**गुण इति तानि तव प्रयोजनम् ।**
**त्वमपि भवसि तेषु तद्वपुः**
**परशिव तेन मतोऽसि सात्त्विकः ॥ ९१ ॥**

---

[1] ता (ग) [2] नास्ति (ग) [3] इति श्रुतेः (ग)

सत्त्वपदं प्राणिपरं, सत्तापरं, गुणविशेषपरं च । जन्तुः प्राणिवर्गः । अस्तिता वर्तमानत्वं कालत्रयाबाध्यसत्तेति यावत् । गुणः रजस्तमोभ्यां पूर्वो गुणविशेषः । इति शब्दो हेत्वर्थः । तथा च यतः जन्त्वादित्रितयमपि त्वयि परमशिवे निवसति संस्थितिं प्राप्नोति, अतः तानि तव प्रयोजनमिति ठक्प्रत्ययप्राप्तिरुक्ता । प्रयोजनत्वं च प्रवर्त्यत्वं, सत्त्वप्रवर्तक इत्यर्थः ।

तथा च श्रुतिः —

महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः । इति ।

अथवा सत्त्वेषु भवः सात्त्विकः । तत्र भवः [1]इत्यर्थेऽध्यात्मादित्वाद् ठञ्, वृत्तित्वार्थकः ठञ्प्रत्ययः, सत्त्ववर्ती इत्याशयेनाह—त्वमपीति । भवसि संबद्धोऽसि । तेषु उपदर्शितसत्त्वपदार्थेषु । तत्र हेतुमाह —तद्वपुरिति । शुद्धसत्तामात्रशरीरवानित्यर्थः । तदुक्तं **स्कान्दे सूतसंहितायाम्**—

यस्य मायागतं सत्त्वं शरीरं स्यात्तमोगुणम्[2] ।
संहाराय त्रिमूर्तीनां स रुद्रः स्यान्न चापरः ॥ इति ।

[3]यस्य[3] परमशिवस्य मायागतं सत्त्वं शरीरं भवति, तस्यैव त्रिमूर्तीनां संहाराय तमोगुणं शरीरं, न तु स्वाभाविकम् इत्यर्थः । [4]अत्र च सर्वप्राण्यन्तर्यामितया जन्तुवृत्तित्वम् । अभेदप्रत्यासत्त्या सत्तावृत्तित्वम् । सत्त्वगुणैकमूर्तिमत्तया गुणविशेषवृत्तित्वम्—इत्यवधेयम् । तथा च राज्ञि राष्ट्रमित्यादिवदारोपिताधाराधेयभावात् जगद्विचित्रचरित्रशाली परमशिव इति उपदर्शितकल्पद्वयतात्पर्यविषयीभूतोऽर्थ इत्याखण्डलार्थः[4] ।

---

[1] इत्यर्थः (ग) [2] तमोगुणः (ग) [3] तस्य (ख,ग)

[4] अत्र वस्तुतस्तु परशिवेति सम्बुद्ध्याक्षिप्तत्वात् सत्त्वरजस्तमोऽतिरिक्तशुद्धसत्त्वविशिष्टत्वेन सात्त्विक इति पदप्रतिपाद्यो भवतीत्यर्थः । (ग)
(अखण्डार्थ इति स्यात्—सं)

[1]इदं चापरवक्त्राख्यं वृत्तम्[1]। तथा च पैङ्गलसूत्रम्। [2]अर्धे इत्यधिकृत्य[2]—अपरवक्त्रं नौ र्लौ ग् न्जौ ज्रौ। [3]विषमपादयोः नगणद्वयं रगणः लघुर्गुरुश्च, समपादयोः, नगणः जगणद्वयं रगणश्च[3] इत्येतत् वृत्तमपरवक्त्राख्यं भवतीत्यर्थः। ॥ ९१ ॥

## *(ओम् शुद्धविग्रहाय नमः)

शुद्धः सत्त्वमात्रप्रधानः विग्रहः शरीरं यस्येति शुद्धविग्रह इत्याह—

**घनघृतमिव सत्त्वमात्रपिण्डो**
**न तु वपुरण्वपि ते रजस्तमोक्तम्।**
**शिव भवसि च नैव कूटयोधी**
**हरसि मलानिति शुद्धविग्रहस्त्वम्॥ ९२ ॥**

घनघृतमिवेत्यादि। घनीभूतं घृतमिव सत्त्वमात्रपिण्डः शुद्धसत्तामात्रशरीरशालीत्यर्थः। तथा च स्मृतिः—

अप्राकृतशरीरं तमतिमन्मथरूपिणम्।
घृतरीतिघनीभूतसच्चिदानन्दविग्रहम्॥ इति।

मात्रपदव्यावर्त्यमाह— **नत्विति**। ते वपुः अण्वपि रजस्तमोभ्यां नाक्तमित्यन्वयः। रजसा तमसा वा न कलुषितमित्यर्थः। अण्वपि न अक्तमित्यनेन शरीरमात्रस्य त्रिगुणात्मकमायामयत्वेऽपि लीलामात्रोपयुक्तेऽस्मिन् परमशिवशरीरे न तत्कार्यं किमपि भवितुमर्हतीत्येतत्सूचितम्।

---

[1] अपवक्त्राख्यं वृत्तमिदम् (ग) [2] नास्ति (ग)
[3] यस्य प्रथमपादे नकारौ रेफलकाराश्च द्वितीये नकारजकारौ भवतः (ग)
*इत आरभ्य चतुर्णां नाम्नां व्याख्यानं व्याख्यात्रन्तररचितं गपुस्तके विशेषत उपलभ्यते। तच्चान्ते अनुबन्धे निवेशितम्।

अत एव—

अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्रगामिनः ।
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः ॥

तमसश्चापि मिथुने ते सत्त्वरजसी उभे ।
उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते ॥

नैषामादिः संप्रयोगो वियोगो वापि लभ्यते ।
इति [1]सांख्याभियुक्तिरप्युपपद्यत इति[1] ।

अथवा विग्रहशब्दो युद्धवाची । शुद्धः अमायिकः विग्रहः संग्रामो यस्य । अमायिकसंग्रामशालीत्यर्थः इत्याशयेनाह—**शिवेत्यादि** । हे शिव, त्वं कूटयोधी मायायुद्धवान् । एतेन युद्धेऽपि मायां न करोतीत्यनेन निष्कपटत्वं नित्यसिद्धमित्युक्तं भवति । अथवा शुद्धः निर्मलः विग्रहः शरीरं यस्माद् [2]यदुपासनाद् इत्यादिना[2] शरीरं निर्मलं भवतीत्यभिप्रेत्याह— **हरसि मलानिति** । अनाद्यविद्यानुवर्त्याणवकार्मणमायीयाख्यान् मलानित्यर्थः । पुष्पिताग्राख्यं वृत्तमिदम् । तथा च पैङ्गलं —

" पुष्पिताग्रा नौ न्जौ ज्रौग् "

विषमपादयोर्नगणद्वयं रगणो यगणश्च । समपादयोर्नगणो जगणद्वयं रगणो गुरुश्च इत्येतद् वृत्तं पुष्पिताग्राख्यं भवतीत्यर्थः । ॥ ९२ ॥

## ( ओम् शाश्वताय नमः )

शश्वत् सदा साधुर्वर्तत इति शाश्वतः । साध्वर्थकः अण्प्रत्ययः । जगदुत्पत्तिस्थित्युप[3]संहाराख्यकाल[3]त्रयवर्तीत्याशयेनाह—

---

[1] नास्ति (क) [2] तदुपासनादिना (ख) [3] संहारकाल (ख)

**पूर्वतो जगतो जनेः सर्वसंहारतः परे ।**
**वर्तमाने जगत्यपि त्वमस्येवेति शाश्वतः ॥ ९५ ॥** 3/

**पूर्वत** इति । जगदुत्पत्तिपूर्वकाले जगत्संहारोत्तरकाले जगद्वर्तमान-काले च त्वमनुस्यूततया वर्तमानत्वात् शाश्वतिको भवसीत्यर्थः ।

तथा च **अथर्वशिखायां** रुद्रवचनम्—"अहमेकः प्रथममासं वर्तामि भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्तः" इति ।

स्पष्टार्थः श्लोकः । जविपुलाख्यं वृत्तमिदम् । तथा च पैङ्गलं सूत्रं सर्वतः सैतवस्य ।अष्टाक्षरेषु पादेषु चतुर्ष्वपि चतुर्थाक्षरोत्तरं तजभनान्यतमो गणश्चेत् सैतवाचार्यस्य मतेन विपुला जविपुला भविपुला नविपुला च क्रमेण भवन्ति । प्रकृते जगणस्यैव सत्त्वात् जविपुलाख्यं वृत्तं भवतीत्यर्थः ॥ ९३ ॥

## ( ओम् खण्डपरशवे नमः )

परान् शृणातीति परशुः । आङ्परयोः "खनिशृभ्यां डिच्च" इत्यौणादिकः कुप्रत्ययः । खण्डाः विभिन्नाः परशवो यस्येति खण्डपरशुः इत्यत्र परशोः खण्डने हेतुमाह—**गजासुरवध** इत्यादिना ।

**गजासुरवधे खण्डास्तव जाताः परशवः ।**
**तदारभ्याखिलैर्देवैर्गीयसे खण्डपरशुः ॥ ९४ ॥**

स्पष्टोऽर्थः । विपरीतचपलाख्यं वृत्तमिदम् । तथा च पैङ्गलं सूत्रं—"चपला युजोन्" अष्टाक्षरपादयोः समयोश्चतुर्थाक्षरोत्तरं यगणो जगणो वा, विषमयोस्तु नगण [1]एव, तद्वृत्तं[1] चपलाख्यं, पादयोर्व्यत्यासेन निवेशे च विपरीतचपलाख्यं भवतीत्यर्थः ।

---

[1] एतद्वृत्तं

## ( ओम् अजाय नमः )

**न जनिः शिव ते तदसि त्वमजः ॥ ९५ ॥**

न जायत इत्यजः । स्पष्टम् । रमणाख्यं वृत्तमिदम् । तथा चोक्तमभियुक्तैः —

प्राक्तेष्वष्टभिर्माद्यैः गोकर्णा च शशी प्रिया ।
रमणं चैव पाञ्चालं मृगेन्द्रश्चैव मन्दरः ॥
कमलं [1]चेति[1] संज्ञाभिर्वृत्ताष्टकमुदीरितम् ॥ इति ।

[2]प्राक्तेषु प्राक्तसूत्रेषु वृत्ताष्टकमुदीरित[2]मित्यनेनान्वयः । माद्यैः मयरसतजभनैः । तथा च मगणात्मकचरणचतुष्टयं यत्र, तद् गोकर्णाख्यम् । यगणात्मकचरणचतुष्टयं यत्र तत् शश्याख्यम् । [3]रगणात्मकचरणचतुष्टयं[3] यत्र, तत्प्रियात्मकम् । इत्येवमष्टभिः संज्ञाभिर्वृत्ताष्टकं भवतीत्यर्थः । प्रकृते च चरणचतुष्टयस्यापि सगणात्मकत्वात् रमणाख्यं वृत्तं भवतीति [4]बोध्यम् ।
॥ ९४ ॥

## ( ओम् पाशविमोचनाय नमः )

पाशाः संसारपतनहेतुभूताविद्याकार्यविशेषाः । कर्तृत्वभोक्तृत्वाद्यभिमानादयः । तेभ्यो जीवान् मोचयतीति पाशविमोचकः । ते च नाना मतभेदेन नानारूपा इत्यावेदयन् तन्निवृत्तिः परमशिवभजनपराणां नराणामतिसुलभेत्यभिप्रायेणाह—

**अभिमतिगुणपञ्चपरुर्दशत्रिचतुर्युतविंशतिपाशतः ।**
**शिव पदभजनेन विमोचयन् पशुगणमिति पाशविमोचकः**
**॥ ९६ ॥**

---

[1] चैव (ख) [2] नास्ति (ख) [3] रगणात्मकं (ख) [4] बोद्धव्यम् (ख)

अभिमतीत्यादि । अभिमतिरभिमानः । कर्तृत्वभोक्तृत्वाद्यहङ्कार इति यावत् । स एव पाश इति पाशैकत्ववादिनः[1] । गुणाः सत्त्वरजस्तमोरूपाः, त एव पाशः इत्येके । पञ्च परूंषि पर्वाणि यस्याः अविद्यायाः सा पञ्चपरुः । तमोमोहमहामोहता[2]मिस्रान्ध[2]तामिस्ररूपाभिन्ना अविद्याऽस्मितारागद्वेषाभि[3]निवेशाख्य[3]पञ्चक्लेशात्मिका अविद्येति यावत् । सैव पाश इत्यन्ये ।

दशेन्द्रियाण्येव पाशा इति अपरे । त्रयः चत्वारो वा त्रिचतुराः । [4]तैर्युता विंशतिस्त्रिचतुरयुतविंशतिः । [5]मनोबुद्ध्यहंकाराः, पञ्च तन्मात्राणि भूतानि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि चेति त्रयोविंशतिः पाशा इति केचित् । चतुर्विंशतितत्त्वान्येव पाशा इत्याहुः परे । तथा च अभिमतिश्च गुणाश्च पञ्चपरुश्च दश च[5] त्रिचतुरयुतविंशतिश्चेति, ताश्च ते पाशाश्च तेभ्य इति पञ्चम्यर्थे तसिल्प्रत्ययः । तथा चोक्तं लैङ्गे —

चतुर्विंशतितत्त्वानि पाशाः स्युः परमेष्ठिनः ।
दशेन्द्रियमयैः पाशैरन्तःकरणसम्भवैः ॥

पञ्चक्लेशमयैः पाशैः पशून् बध्नाति शङ्करः ।
अविद्यामस्मितां रागं द्वेषं च मुनिसत्तमाः ॥

वदन्त्यभिनिवेशं च क्लेशान् पाशत्वमागतान् ।
तमो मोहो महामोहस्तामिस्रमिति पण्डिताः ॥

[6]अन्धतामिस्रमित्याहुरविद्यां पञ्चधा स्थिताम् ।
अविद्यां तम इत्याहुरस्मितां मोह इत्यपि ।
रागमाहुर्महामोहं द्वेषं तामिस्रमुच्यते ॥[6]

---

[1] अयं भागो नास्ति (ग) [2] अयमपि नास्ति (ग) [3] निवेशाख्यात्मक (ख)
[4] तैर्युक्ता (क) [5] अयं भागः खगयोरुभयोर्नास्ति [6] नास्त्ययं भागः (क)

अन्धतामिस्रमित्याहुः तथैवाभिनिवेशनम् ।
ब्रह्मादिस्तम्बपर्यन्तान् पशून्बद्ध्वा महेश्वरः ॥
त्रिभिर्गुणमयैः पाशैः कार्यं [1]कारयति स्वयम् । इत्यादि ।

**शिवपदेति** । उपदर्शितानेकविधपाशेभ्यः पशुगणं जीवं जीवराशिं त्वदीयपदारविन्दभक्त्या विमोचयन् पाशविमोचक इति प्रसिद्धो भवसीत्यर्थः । परमशिवभजनस्य पाशविमोचकत्वं लैङ्गे [2]यथा —

स एव मोचकस्तेषां भक्त्या सम्यगुपासितः ।
अविद्यापाश[3]बद्धानां नान्यो मोचक इष्यते ॥
तमृते परमात्मानं शङ्करं परमेश्वरम् । इति ।

**वायवीयसंहितायामपि —**

भावातिशयलभ्येन प्रसादेन मलक्षयः । इति ।

**मन्त्रोपनिषद्यपि —**

संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः ।
अनीशश्चात्मा बध्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ इति ।

उज्ज्वलाख्यं वृत्तमिदम् । [4]तदुक्तमभियुक्तैः[4]— " ननभरसहिताभिहितोज्ज्वला " । प्रतिपादं नगणद्वयं भगणः [5]रगणश्चेत्येतद्वृत्तमुज्ज्वलाख्यं भवतीत्यर्थः[5] । ॥ ९६ ॥

मृडः पशुपतिर्देवो महादेवोऽव्ययो हरिः ।
पूषदन्तभिदव्यग्रो दक्षाध्वरहरो हरः ॥
दशनामान्येतानि निर्वक्ति पूर्णेत्यादिना —

---

[1] कारयते (ख,ग) [2] नास्ति (ग) [3] बन्धानां (क,ख) [4] सूत्रात् (ग)
[5] रगणैः सहितोज्ज्वलेति प्रसिद्धा (ग)

( ओम् मृडाय नमः )

मृड इति मृड सुखन इति धातोः मृडयति सुखयतीति मृडः, सुखजनक इत्यर्थः । तच्च सुखं ज्ञानेन कर्मणा वेत्युभयथापि संभवतीत्याह —

**पूर्णाहुत्या त्वयि सुहिते यज्ञे पूर्णे सति सुहिते ।**
**यष्टॄन् ध्यातॄनपि सुखयस्यार्यानेतस्तदसि मृडः ॥ ९७ ॥**

**पूर्णाहुत्येत्यादि** । सुहिते तृप्ते । सुहिते, शोभनं हितं [1]इष्टं यत्र तस्मिन् । तथा च इष्टार्थे [2]जनकीभूतयज्ञसंपूर्तौ जातायां पूर्णाहुत्या परमशिवे च तृप्ते सति यष्टॄन् याजकान् ध्यातॄन् ज्ञानिनश्च सुखयसि सुखिनः करोषीत्यर्थः । तदुक्तमन्यत्र —

ज्ञानयोगरताः केचित् कर्मयोगरताः परे ।
तेषामानन्ददः शम्भुः कालयोगविवर्जितः ॥

**आर्यानेत इति** । आर्यायाः पार्वत्याः नेतः नायक इति सम्बुद्धिः । पारन्ती संज्ञकं वृत्तमिदम् । [3]तदुक्तमभियुक्तैः— "पारन्ती वै मभसगणैः" । प्रतिपादं मगणः भगणः सगणश्चेत्येतद् वृत्तं पारन्तीसंज्ञकं भवतीत्यर्थः ।
॥ ९७ ॥

( ओम् पशुपतये नमः )

पशुशब्दः पशुपाशोभयपरः । पशुश्चासौ पतिश्चेति कर्मधारयः । तत्र पशुः पाशः पतिरिति त्रिपदार्थवादिनः शैवाः पाशुपतापरनामकाः, तेषां मतमभिप्रेत्याह —

**ख्यातं तन्त्रेषु पाशः पशुरथ पतिरित्येतत्त्रयमपि**
**त्वद्रूपं नाथ जीवान् नियमयसि नुतो मुक्तांश्च कुरुषे ।**

---

[1] दृष्टं (ख,ग) [2] जनकाभूत (ग) [3] नास्ति (ग)

**ग्राम्यारण्याधिपत्यं वहसि च यजमानात्माभिमतिमान्**
**भक्तान् नेपालपीठे रमयसि निवसन्नासीः पशुपतिः ॥ ९८ ॥**

**ख्यातमिति ।** प्रसिद्धमित्यर्थः । तन्त्रेषु शैवतन्त्रेषु । तथा चोक्तं **वायुसंहितायाम्**—

अजडं च जडं चैव नियन्तृ च तयोरपि ।
पशुः पाशः पतिश्चेति कथ्यते त्रितयं क्रमात् ॥
अक्षरं च क्षरं चैव क्षराक्षरपरं तथा ।
तदेतत् त्रितयं भूयः कथ्यते [1]तत्त्ववेदिभिः ॥ इति ।

**त्वद्रूपमिति ।** तथा च पदार्थत्रितयात्मकप्रपञ्चस्वरूपः परमशिव एव इति पशुपाशपतित्रयात्मकत्वात् पशुपतिरित्यर्थः । अथवा पशवः ब्रह्मादि-स्थावरान्ताः प्राणिनस्तेषां पतिर्नियामकः पशुत्वविमोचकश्चेत्य[2]भिप्रेत्याह— **नाथ जीवान् नियमयसीति ।** तदुक्तं **लैङ्गे** —

ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य शूलिनः ।
पशवः परिकीर्त्यन्ते संसारवशवर्तिनः ॥ इति ।

नाथेति सम्बुद्धिः । नुतः पशुभिः स्तुतः संस्तान् मुक्तांश्च कुरुषे आनाद्यविद्यावासनात्मकसंसारपाशबन्धनशून्यान् करोषीत्यर्थः । [3]अथवा गवाश्वादि[3]पशूनां पतिः अधिपतिः स्वामीत्यर्थः इत्याशयेनाह— **ग्राम्या-रण्येति ।** ग्राम्याः ग्रामोद्भवाः सात्विकभावाः गवादयः । आरण्या अरण्योद्भवाः क्रूरभावाः सिंहव्याघ्रादयश्च । तेषां यदाधिपत्यं स्रष्टृत्वपाल-कत्वादिरूपं तद्वहसीत्यर्थः । तथा चोक्तं **हरिवंशे** —

---

[1] तत्त्ववादिभिः (ख) [2] प्रायेणाह (ग) [3] यद्वा गवाद्यश्वादि (ग)

पालयामि पशून् यस्मात् सृजामि च यदृच्छया ।
तेषां च पतिरेवाहं तस्मत्पशुपतिः स्मृतः ॥ इति ।

अथवा पशुपतिरिति परमशिवाष्टमूर्त्यन्तर्गतात्मयजमानाभिमानिमूर्ति-विशेष एवेत्याशयेनाह—**यजमानात्माभिमतिमान्** इति ।

तदुक्तं वायुसंहितायाम् —

सर्वात्मनामधिष्ठात्री सर्वक्षेत्रनिवासिनाम् ।
मूर्तिः पाशुपती ज्ञेया पशुपाशनिकृन्तनी ॥ इति ।

अथवा नेपालाख्ये महापीठे पशुपतीश्वर इति प्रसिद्धिबलाद्वा तथा इत्याह—**भक्तानिति** । रमयसि आनन्दयसि । स्पष्टमन्यत् । सुवदनाख्यं वृत्तमिदम् । [1]तदुक्तं भगवता[1] पिङ्गलेन— "सुवदना म्रौ भ्नौ य्भौ ल्गौ स्वरऋषिरसाः" । प्रतिपादं मगणः रगणः भगणः नगणः यगणः भगणः लघुर्गुरुश्च । सप्तभिः सप्तभिः षड्भिश्च यतिरित्येतद् [2]वृत्तं सुवदनाख्यं भवतीत्यर्थः[2] । ॥ ९८ ॥

## ( ओम् देवाय नमः )

दीव्यतीति देवः । दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमद-स्वप्नकान्तिगतिषु इति धात्वर्थाभिप्रायेणाह —

**द्युतिमोदव्यवहारात् सुरजातिष्ववतारात् ।**
**शशिमौले जगतीनामधिपत्वादपि देवः ॥ ९९ ॥**

**द्युतिमोदे**त्यादि । द्युतिर्दीप्तिः, मोद आनन्दः, व्यवहारो व्यवहृतिः प्रवृत्त्यादिरूपेति यावत् । द्युतिर्मोदो व्यवहारश्चेति तेषां समाहारः, तस्मा-दिति समाहारद्वन्द्वः । द्युतिमोदसहितव्यवहारादिति मध्यमपदलोपी वा समासः । तथा च देदीप्यमानः आनन्दवान् व्यवहृतिमांश्चेत्यर्थः ।

---

[1] अभिहितं (ग) [2] तदेवेत्यर्थः (ग)

नन्वेतावता द्युत्यामोदादिप्रदर्शनेन धात्वर्थोपपादनेऽपि कथं देवशब्द-प्रवृत्तिनिमित्ताया: देवत्वजातेः शरीरविशेषवृत्तितया तत्र तदसम्भवादित्या-शङ्क्याह—**सुरजातिष्ववतारादिति**। यथा च मनुष्योऽहं, ब्राह्मणोऽहं, जानामीत्यादौ शरीरगतमानुषत्वजात्यादिकमादायात्मन्यहमिति प्रयोगस्तथा देवशरीरवर्ति [1]देवत्वजाति[1]मादायापि परमशिवे देवपदप्रवृत्तिविषयत्वं सूपपन्न-मिति भावः।

अथवा "राजा भट्टारको देवः" इति कोशात् [2]प्रमुख[2]स्वामिपर्यायो देवशब्दः सर्वाधिपत्यं बोधयतीत्याह—**जगतीनामिति**। लोकानामित्यर्थः।

तथा च श्रुतिः—

"सर्वेश्वरः शम्भुराकाशमध्ये
सर्वाधिपत्यं कुरुते महात्मा"। इति।

शशिमौले इति [3]सम्बुद्धिः[3]। स्पष्टमन्यत्। मोदाख्यं वृत्तमिदम्। [4]तदुक्तमभियुक्तैः[4]—"सभगा गो यदि मोदः"। प्रतिपादं सगणः भगणः गुरुद्वयं चेत्येतद् वृत्तं मोदाख्यं भवतीत्यर्थः। ॥ ९९ ॥

## (ओम् महादेवाय नमः)

महांश्चासौ देवश्चेति महादेवः। तत्र महत्त्वं ब्रह्मविष्णवाद्यखिल-गणैर्नमस्यत्वं स्तुत्यत्वं वेत्याशयेनाह—

**गीर्वाणानामपि मधुहादीनां
नमनीयः स्तवनीयस्त्वं देवः।
शशिबिम्बेऽधिष्ठात्री तव मूर्ति-
र्जगदाप्याययतीति महादेवः ॥ १०० ॥**

---

[1] देवजातिम् (ग) [2] प्रभु (ख) [3] सम्बोधनम् (ग) [4] पिङ्गलसूत्रे (ग)

गीर्वाणानामपीति । मधुहादीनां विष्ण्वादीनां नमनीयः नमस्कार-विषयः । तदुक्तं साम्बपुराणे—

पूज्यते यस्सुरैस्सर्वैर्महांश्चैव [1]प्रमाणतः ।
धातुर्महेति पूजायां महादेवस्ततः स्मृतः ॥ इति ।

श्रुतिरपि —

"तमीश्वराणां परमं महेश्वरं
तद्दैवतानां परमं च दैवतम् ॥" इति ।

अथवा महादेव इति चन्द्राधिष्ठातृ मूर्ति विशेष एवेत्याह—**शशिविम्ब** इति । चन्द्रमण्डलान्तःसमाधिष्ठिता सती महादेवाख्या तव मूर्तिः अमृतासारेण जगदाप्याययति आनन्दयतीत्यर्थः ।

तदुक्तं **शिवपुराणे** —

आप्याययति यो नित्यममृतांशुर्निशाकरः ।
महादेवस्य सा मूर्तिर्महादेवसमाह्वया ॥ इति ।

कलहंसी[2]संज्ञकं मात्रावृत्तमिदम् । तथा चोक्तम**भिनववृत्तरत्नाकरे**[2] —"षण्मात्रैस्त्रिभिरुदिता कलहंसी" यत्र प्रतिपादमष्टादश मात्राः सन्ति, तत् कलहंसीसंज्ञकं वृत्तं भवतीत्यर्थः । ॥ १०० ॥

## ( ओम् अव्ययाय नमः )

[3]व्येति विविधतया गच्छति, जायते अस्ति वर्धते विपरिणमते अपक्षीयते नश्यतीति षड् भावविकारान् प्रतिपद्यत इति व्ययः नश्वरः पदार्थ-

---

[1] प्रयत्नतः(क), प्रमाणतः(ग) [2] नामकं वृत्तमिदं मात्रावृत्तम् अभिनवरत्नाकरे (ग)
[3] व्ययति (ग), अव्ययेति (ख)

व्यूहः, स न भवतीत्यव्ययः, "यन्न व्येति तदव्यम्" इति **गोपथब्राह्मण**-प्रदर्शितां व्युत्पत्तिमभिप्रेत्याह —

**न जायसे परिणमसि प्रवर्धसे**
**न हीयसे न च विकृतोऽसि नश्यसि ।**
**त्वमव्ययैर्दशभिरपि क्षमादिभिः**
**परिष्कृतः परशिव तेन चाव्ययः ॥ १०१ ॥**

**न जायसे** इत्यादि । **नश्यसीति** । जन्मादिनाशान्ताः षड्भावविकाराः शरीरस्यावस्थाविशेषाः सार्वजनीनानुभवसिद्धा इति स्पष्टोऽर्थः । अथवा अव्ययानि प्रागुपदर्शितानि [1]वैराग्यादीन्यस्मिन् सन्तीत्यव्ययः । अव्ययवान् इत्यर्थः । [2]अर्श आदित्वादच् प्रत्ययः इत्याशयेनाह — **त्वमव्ययैरिति** । क्षमादिभिः । तदुक्तं **विष्णुपुराणे**[2]—

ज्ञानं [3]विरागतैश्वर्यं[3] तपः सत्यं क्षमा धृतिः ।
स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च ।
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे ॥ इति ।

**परिष्कृत** इति । अलंकृत इत्यर्थः । स्पष्टमन्यत् । रुचिराख्यं वृत्तमिदम् । [4]तथा च पैङ्गलं सूत्रं[4]— "रुचिरा ज्भौ स्जौग् चतुष्कनवकौ" प्रतिपादं जगणः भगणः सगणः जगणः गुरुः, चतुर्भिर्नवभिश्च यतिरित्येतद् वृत्तं रुचिराख्यं भवतीत्यर्थः । ॥ १०१ ॥

## ( ओम् हरये नमः )

हरति भक्तानां दुरितानीति हरिः । "इन्सर्वधातुभ्यः" इति हरतेरौणादिक इन् प्रत्ययः । तथा च संकीर्त्यमानं [5]सत् परमशिव[5]प्रति-

---

[1] ज्ञानवैराग्यादीनि (ग) [2] नास्ति (ख,ग) [3] विरागमैश्वर्यं (ग) [4] पैङ्गले (ग)

पादकं नामैव यद्यशेषदुरितापहारि भवेत्, साक्षात् स्वयमेव परमशिवः संसारैकपाशबद्धानपि स्वभक्तान् विमोचयतीत्यत्र किं विचित्रमिति कैमुतिक-न्यायमभिप्रेत्याह —

**परशिव तव नामसङ्कीर्तनं**
**कलिकलुषितचेतसां पावनम् ।**
**निवससि नगरे हरिश्चन्द्रके**
**हरसि च दुरितानि स त्वं हरिः ॥ १०२ ॥**

**परशिव** इति । कलिकलुषितचेतसां, कलिप्रयुक्तपापेन कलुषितानि [1]दूषितानि चेतांसि अन्तःकरणानि येषाम् । कलिमलग्रस्तचित्तानां पुरुषाध-मानामपि त्वन्नामसङ्कीर्तनं पावनं [2]पापापनोदन[2]करमिति बहुश्रुतिस्मृतीतिहासा-दिषु प्रसिद्धमित्यर्थः । अथवा हरिश्चन्द्राख्यक्षेत्रविशेषे हरीश्वर इति प्रसिद्धिबलात्तथेत्याह — **निवससीति** । हरसि च दुरितानीति हरिशब्द-व्युत्पत्तिप्रदर्शनपरम् । प्रमुदितवदनाख्यं वृत्तमिदम् । [3]तदुक्तमभियुक्तैः[3]— " प्रमुदितवदना भवेन्नौ च रौ " । प्रतिपादं नगणद्वयं रगणद्वयं चेत्येतद् वृत्तं प्रमुदितवदनाख्यं भवतीत्यर्थः । ॥ १०२ ॥

## ( ओम् पूषदन्तभिदे नमः )

पूष्णः [4]सूर्य[4]मूर्तिविशेषस्य दन्तान् भिनत्त्युपाटयतीति पूषदन्तभि-दित्यत्र दन्तोत्पाटनहेतुभूतं अपराधं दर्शयन्नाह —

**अधिमखं रदविकासपूर्वकं**
**परिहसन्तमवलोक्य पूषणम् ।**
**शिव भवान् अकृत पिष्टभागिनं**
**गलितदन्तमिति पूषदन्तभिद् ॥ १०३ ॥**

---

[1] नास्ति (ग) [2] पापनोदन (ख) [3] पैङ्गलसूत्रे [4] सूर्यस्य (क,ख)

**अधिमखमति**। यज्ञमध्य इत्यर्थः। रदविकासपूर्वकं दन्तप्रकाशपूर्वकम्। परिहसन्तमुपहसन्तं पूषणं सूर्यं द्वादशकेष्वेकम्। तथा च पुरा हि दक्षाध्वरशालामुपगतान् असंख्यातान् महर्षिप्रभृतिसुरगणान् औदासीन्येन परमशिवमुपहासपूर्वकं [1]सहसाप्यवमन्य[1]मानान् अवलोक्य परमदारुणभावेन संवर्तसमयप्रज्वलितकालाग्निमग्नाकारेण घोरवीरभद्रावतारेण पुनः स्वयमेव परमशिवस्तान् यथोपहासमशिक्षयत्। तत्र च दन्तान् [2]व्यादाय परिहसितं पूष्णेति [3]तद्दन्ताः पातिताः इत्यादिकं तत्तत्पुराणेषु [4]स्पष्टं प्रतिपादितम्।

तथा [5]चोक्तं लैङ्गे —

वीरभद्रः चतुःषष्टिरोमजैस्तैर्गणैर्वृतः।
व्यष्टम्भयददीनात्मा यथान्येषां दिवौकसाम्॥
भगस्य नेत्रे चोत्पाट्य करेणोग्रेण लीलया।
निहत्य मुष्टिना दन्तान् पूष्णश्चैव न्यपातयत्॥ इति।

शिवपुराणेऽपि —

पूष्णो दशनपङ्क्तिं च [6]दीप्त्या मुक्तावलीमिव[6]।
बिभेद धनुषः कोट्या ततः सोऽस्पष्टवागभूत्॥ इति॥

शिवेति संबुद्धिः। हे परमशिव, भवान् गलितदन्तं दन्तशून्यं पूषणं पिष्टभागिनमकृत कृतवानित्यर्थः। तथा च श्रुतिः— "पूषा प्रपिष्टभागः अदन्तको हि सः" इति। स्पष्टार्थमन्यत्। प्रियंवदाख्यं वृत्तमिदम्। तथा चोक्तमभियुक्तैः— "भुवि भवेन्नभजरैः प्रियंवदा।" प्रतिपादं नगणः भगणः जगणः रगणश्च इत्येतद् वृत्तं प्रियंवदाख्यं भवतीत्यर्थः॥ १०३॥

---

[1] सहसाप्यमन्य (न) [2] आदाय (ख, ग) [3] दन्ताः (ग) [4] प्रसिद्धं स्पष्टं
[5] च (ग) [6] दिव्याषलीमिव (ख)

## ( ओम् अव्यग्राय नमः )

व्यग्रो विभ्रान्तचित्तः, स न भवतीत्यव्यग्रः । निश्चिन्त इत्यर्थः इत्यभिप्रेत्याह —

> पौलस्त्येनोन्नमनसमये कैलासाद्रे-
> र्ब्रह्माण्डानामपि दहनकाले संवर्ते ।
> युद्धेष्वन्येष्वपि बहुषु सन्तोषोद्रेका-
> द्देवीं पश्यन्नटसि शिव तस्माद्व्यग्रः ॥ १०४ ॥

**पौलस्त्येनेति** । पौलस्त्यः पुलस्त्यवंशोद्भवः दशाननः । तेन कैलासाद्रेरुन्नमनसमये उच्चालनसमये देवीं पश्यन्नटसि इत्युत्तरेण संबन्धः । ब्रह्माण्डानां संवर्ते [1]प्रलयदहनसमये इत्यर्थः[1] । संवर्तः प्रलयः कल्प इत्यमरः । **युद्धेष्वन्येष्विति** । त्रैपुरादियुद्धेषु कालकूटाशनाद्यशक्यकार्येषु चेत्यर्थः । सन्तोषवत्त्वादव्यग्रत्वं परमशिवस्येत्यर्थः । हंसश्येनीसंज्ञकं वृत्त-मिदम् । [2]तदुक्त[2]मभियुक्तैः— मोभोन्मौगौ यदि निगदिता हंसश्येनी । [3]प्रतिपादं मगणः भगणः नगणः मगणः गुरुद्वयं चेत्येतद् वृत्तं हंसश्येनी[3]-संज्ञकं भवतीत्यर्थः । ॥ १०४ ॥

## ( ओम् दक्षाध्वरहराय नमः )

अत्र दक्षो द्विविधः । अमानुषो मानुषश्च । तत्र अमानुषो दक्षः प्रजापतित्वेन प्रसिद्धः, यस्य जामातृत्वमापन्नः परमशिवोऽपि । मानुषश्च राजा तस्यैवावतारविशेषः । तयोरध्वरौ हरति नाशयतीति दक्षाध्वरहर इत्यभिप्रायेण दक्षपदार्थावेव आदौ दर्शयति —

---

[1] प्रलयसमये (ख,ग) [2] नास्ति (ग) [3] नास्ति (क)

पुरा देवो दक्ष इति शिव तवैकः श्वशुरकः
परो मर्त्यो दक्ष इति विटपिकन्योदरभवः ।
प्रचेतःपुत्रोऽखिलमखफलदातापि च भवां-
स्तयोर्यज्ञौ हा व्यदलय इति दक्षाध्वरहरः ॥ १०५ ॥

**पुरा देव** इति । श्वशुरक इत्यत्र स्वार्थे कुत्सिते वा कप्रत्ययः । शिवद्रोही श्वशुर इत्यर्थः । **विटपिकन्योदरभव** इति । स एव दक्षः कचि[1]त्प्रकुपिनेन[1] परमशिवेन शाखिनां कन्यायां त्वं भवितेति शप्तः सन् विटपिकन्योदरान्मानुषत्वं प्राप्त इत्यर्थः ।

तदुक्तं [2]ब्रह्मपुराणवायुपुराणयोः —

अभिव्याहृत्य सप्तर्षीन् दक्षं सोऽभ्यशपत्पुनः ।
भविता मानुषो राजा [3]चाक्षुषस्य त्वमन्वये[3] ॥
प्राचीनबर्हिषः पौत्रः पुत्रश्चैव प्रचेतसः ।
दक्ष इत्येव नाम्ना त्वं मारिषायां जनिष्यसि ॥
कन्यायां शाखिनां चैव प्राप्ते वै चाक्षुपान्तरे ।
अहं तत्रापि ते यज्ञं हन्मि देव्याः [4]प्रियेप्सया ॥ इति ।

चाक्षुषस्य चतुर्दशमन्वन्तर्गतस्य मनुविशेषस्य वंशे त्वं भवितेति शप्तवान् इत्यर्थः । **अखिलेति** । तयोर्मानुषामानुषयोर्दक्षयोः । **यज्ञाविति** । तथा चाखिलस्याप्यध्वरस्य फलं स्वर्गादिरूपाभिलषितार्थसिद्धिं प्रयच्छन्नपि यज्ञौ व्यदलयत्, व्यनाशयत् [5]इति अध्वरकारकस्तत्संहारकश्चेत्याश्चर्यकरं भवच्चरित्रं चिन्त्यमित्यभिप्रेत्याह—हा इति । "हा विषादशुगर्तिष्व-

---

[1] कुपितेन (ग) [2] ब्रह्मयायुपुराणयोः (ग) [3] चाक्षुषत्वस्य मन्यसे (ग)
[4] प्रियेक्षया (ग) [5] इत्यर्थः (ग)

व्ययम्" । स्पष्टमन्यत् । कलातन्त्राख्यं वृत्तमिदम् । [1]तथा चोक्तमभियुक्तैः—[1] "कलातन्त्रं यात्तनसभलगुभिर्गेन सहितम् ।" प्रतिपादं यगणः तगणः नगणः सगणः भगणः लघुर्गुरुश्चेत्येतद् वृत्तं कलातन्त्राख्यं भवतीत्यर्थः । यादित्यत्र पञ्चमी दिग्योगे यगणात्परैरित्यर्थः । ॥ १०५ ॥

## (ओम् हराय नमः)

हरत्युपसंहरत्यखिलमिति हरः । अत्र च सृष्टिस्थित्युपसंहाराख्यप्रपञ्चकार्यकारिण्यो भवमृडहराख्यास्तिस्रो मूर्तयः परमशिवस्य । तत्र सत्त्वगुणेन भवमूर्त्या, रजोगुणेन मृडमूर्त्या प्रथमकार्यं सृष्टिं द्वितीयं च स्थितिं यथा करोति तथा तमोगुणेन हरमूर्त्या संहाराख्यं तृतीयकार्यमपि करोतीति दृष्टान्तपूर्वकं परमशिवस्य हरपदवाच्यत्वमुपपादयति —

**परशिव जनयसि भव इति भणितः**
**स्थिरमपि रचयसि मृडपद[2]गणितः ।**
**सुचरमचरमपि चरमगुणधरः**
**प्रहरसि जगदिदमखिलमिति हरः ॥ १०६ ॥**

**परशिवेत्यादि । जनयसीति ।** भवति अस्मात् सर्वमिति व्युत्पत्त्या उत्पादयसीत्यर्थः । स्थिरमपि उत्पन्नस्य स्थितिमपि रचयसि । मृडयति सुखयतीति व्युत्पत्त्या सुखयसि सुखवत् करोषि इत्यर्थः । सुचरं जङ्गमम् । अचरं स्थावरम् । स्थावरजङ्गमात्मकप्रपञ्चमात्रमित्यर्थः । चरमगुणधरः चरमगुणस्तमोगुणः, तद्वान् प्रहरसि उपसंहरसि इत्यर्थः । मणिगणनिकराख्यं वृत्तमिदम् । [3]तथा च पैङ्गलं सूत्रं[3]— "मणिगणनिकरो वस्त्रृपयः" । अत्र चन्द्रावर्तासूत्रात् 'नौनौस्' इत्यनुवर्तते । तथा च प्रतिपादं नगण-

---

[1] सूत्रोक्तं (ग) [2] गदितः (क) [3] सूत्रात् (ग)

चतुष्टयं, सगणः, अष्टभिः सप्तभिश्च [1]यतिरित्येतद् वृत्तं[1] मणिगणनिकराख्यं भवतीत्यर्थः । ॥ १०६ ।

भगनेत्रभिदव्यक्तः सहस्राक्षः सहस्रपात् ।
अपवर्गप्रदोऽनन्तो तारकः परमेश्वरः ॥
अवशिष्टं नामाष्टकं निर्वक्ति—**विष्णिवत्यादिना** ।

**(ओम् भगनेत्रभिदे नमः)**

**विष्णुब्रह्माद्यखिलदिविषद्वृत्ते मखमण्डपे**
**वीरं भद्रापतिमुपगतं सुरासुरमर्दनम् ।**
**कोपाटोपादरुणनयनो भगस्तमदीदृशत्**
**तन्नेत्रे स प्रसभमभिनत्ततो भगनेत्रभित् ॥ १०७ ॥**

[2]भगस्य नेत्रे भिनत्ति उत्पाटयतीति भगनेत्रभित्[2] । विष्णिवत्यादि । विष्णुब्रह्मादयो ये दिविषदो देवास्तैरखिलैर्वृत्ते व्याप्ते मखमण्डपे [3]यज्ञशालायाम् । **भद्रापतिमिति** । पराशक्तिकोपादाविर्भूतायाः भद्रकाल्याः पतिं स्वामिनं सुरासुरमर्दनं सुरासुराणां नाशकम् । तथा च दक्षाध्वरविनाशाय परमशिवेन प्रेषितं वीरभद्रमित्यर्थः । कोपाटोपात् क्रोधावेशात् अरुणनयनः आरक्तेक्षणः भगः सूर्यमूर्तिविशेषः तं वीरभद्रमदीदृशत् पुनः पुनरपश्यत् । तन्नेत्रे सूर्यनेत्रे, सः वीरभद्रः प्रसभं बालात् अभिनदिति ।

तथा चोक्तं **लैङ्गे**—

दग्धुं वै [4]प्रेषितश्चासौ[4] भगवान् परमेष्ठिना ।
तदोत्पाता बभूवुर्वै लोकानां भयशंसिनः ॥

---

[1] यतिरिति (ग) [2] नास्ति (क) [3] यज्ञमण्डपे (ग) [4] प्रहितश्चायं (ग)

पर्वताश्च व्यशीर्यन्त चकम्पे च वसुन्धरा ।
मरुतश्चा[1]प्यधूयन्त[1] चुक्षुभे मकरालयः ॥

अग्नयो नैव दीप्यन्ते न च दीप्यति भास्करः ।
ग्रहाश्च न प्रकाशन्ते न देवा न च दानवाः ॥

ततः क्षणात्प्रविश्यैव यज्ञवाटं महामनाः ।
रोमजैः सहितो भद्रः कालाग्निरिव चापरः ॥

उवाच भगवान् भद्रो दक्षं चामिततेजसम् ।
संपर्कादेव दक्षस्य मुनिदेवाः पिनाकिना ।
[2]दग्धुं वै प्रेषितश्चाहं भवतश्च मुनीश्वराः ॥
इत्युक्त्वा यज्ञशालां तां ददाह गणपुङ्गवः ।
गणेश्वराश्च संक्रुद्धाः यूपानुत्पाट्य चिक्षिपुः ॥
गृहीत्वा सत्वरं सर्वान् गङ्गास्रोतसि चिक्षिपुः ।
वीरभद्रश्चतुष्षष्टिरोमजैस्तैर्गणैर्वृतः ॥

व्यष्टम्भयददीनात्मा तथान्येषां दिवौकसाम् ।
भगस्य नेत्रे चोत्पाट्य करेणोग्रेण लीलया ॥

निहत्य मुष्टिना दन्तान् पूष्णश्चैव न्यपातयत् । इति ।

तथा च **वायवीयसंहितायामपि** —

भगस्य विपुले नेत्रे शतपत्रसमप्रभे ।
प्रसह्योत्पाटयामास भद्रः परमवेगवान् ॥ इति ।

भाराक्रान्ताख्यं वृत्तमिदम् । [3]तथा चोक्तमभियुक्तैः[3]— "भाराक्रान्ता श्रुतिरसहयैर्मभौ नरसालगौ" प्रतिपादं मगणः भगणः नगणः रगणः

---

[1] प्यपूर्यन्त (क) [2] भाषान्तश्च (ग), भवतां च (क) [3] सूत्रम् (ग)

सगणो लघुर्गुरुश्च । चतुर्भिः षड्भिः सप्तभिश्च यतिरित्येतद् [1]वृत्तं भाराक्रान्ताख्यं भवतीत्यर्थः । ॥ १०७ ॥

## ( ओम् अव्यक्ताय नमः )

व्यक्तं न भवतीत्यव्यक्तम् । परमशिवतत्त्वमित्यर्थः । तथा च यत्तत्त्वं साङ्ख्यैर्मूलप्रकृतिरित्यभिमन्यते, [2]यच्च वेदान्तिभिः पाराशर्यप्रमुखैश्चित्प्रकाशात्मकपरञ्ज्योतिस्स्वरूपमिति तत्तत्त्वं त्वत्स्वरूपमेवेत्यव्यक्तस्वरूपः परमशिवः इत्यभिप्रेत्याह —

**साङ्ख्यो मूलप्रकृतिरिति यदाचख्यौ**
**यत्पाराशर्यश्चिदिति गदति तत्त्वं तत्त्वम् ।**
**सामष्टयं चाक्षरमपि भुवि नैव व्यक्तं**
**लिङ्गं बाणाभिधमपि शिव इत्यव्यक्तः ॥ १०८ ॥**

**सांख्य** इत्यादि । यत्तत्त्वं साङ्ख्यः मूलप्रकृतिरित्याचख्यौ इत्यन्वयः ।

[3]यदाहुः साङ्ख्याः —

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ (सां.का. १)

इति ।

" सूक्ष्ममलिङ्गमचेतनमनादिनिधनं तथा प्रसवधर्मि ।
निरवयवमेकमेव हि साधारणमेतदव्यक्तम् ॥ इति ।

**ब्रह्माण्डपुराणेऽपि —**

त्रयोविंशतितत्त्वानि व्यक्तशब्देन सूरयः ।
वदन्त्यव्यक्तशब्देन प्रकृतिं च परां तथा ॥ इति ।

---

[1] नास्ति (ग) [2] नास्ति (ग) [3] यदाहुः (ग)

**यत्पाराशर्य** इति । यत्तत्त्वं पाराशर्यः पराशरात्मजो व्यासः । **चिदिति गदतीति** । चित्प्रकाशात्मकपरंज्योतिःस्वरूपमिति वदतीत्यर्थः । "तदव्यक्तमाह हि" इत्यधिकरणे

"न चक्षुषा गृह्यते नापि वाचा
नान्यैर्देवैः तपसा कर्मणा वा ।"

इत्यादिश्रुतिभिः तथा निर्णयात् । **तत्त्वमिति** । प्रथमं तत्त्वमित्येकं पदं पूर्वेण यत्पदेनान्वितम् । द्वितीयं तत् त्वम् इति पदद्वयम् । तादृशं तत्त्वं त्वमेव, त्वत्स्वरूपमेवेत्यर्थः । अथवा 'व्यक्ताव्यक्तात्मकाखिलप्रपञ्च'[1]-समष्ट्यात्मकत्वा'दक्षरत्मकत्वाद्बाणलिङ्गात्मकत्वाद्वा तथा ।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

इत्यादिप्रमाणोक्तेरित्यभिप्रायेणाह—**सामष्टयं चेत्यादि** । समष्टि-स्वरूपमित्यर्थः । तदुक्तं **नृसिंहपुराणे**— समष्टिं विदुरव्यक्तं व्यक्तं व्यष्टिं मुनीश्वराः । इति । **अक्षरमपीति** । तस्याप्यक्षरत्वमुक्तं **मत्स्यपुराणे**—

उक्तमक्षरमव्यक्तं व्यक्तं क्षरमुदाहृतम् ॥ इति ।

**भुवि नैव व्यक्तमिति** । बाणाभिधं यल्लिङ्गं तद् भुवि अव्यक्तपद-वाच्यमित्यर्थः । तदुक्तं **ब्रह्मवैवर्ते** —

स्वायम्भुवं बाणलिङ्गं शैललिङ्गमिति त्रिधा ।
कीर्तितं व्यक्तमव्यक्तं व्यक्ताव्यक्तमिति क्रमात् ॥

---

[1] व्यक्ताऽव्यक्तप्रपंच (ग) [2] क्षराक्षरात्मकत्वाद् (ग)

व्यक्तं भुक्तिप्रदं मुक्तिप्रदमव्यक्तमुच्यते ।
भुक्तिमुक्तिप्रदं लिङ्गं व्यक्ताव्यक्तं प्रचक्षते ॥
द्विस्त्रिस्तुलां समारूढं वृद्धिमेति न हीयते ।
तद्बाणलिङ्गमुदितं शेषं शैलं विदुर्बुधाः ॥ इति ।

शिव इति । एतत्सर्वमव्यक्तपद[1]वाच्यं शिवस्वरूपमेवे[2]ति अ[2]व्यक्तपदवाच्यत्वं परमशिवस्येत्यर्थ इति ।

[3]कुटिलकाख्यं वृत्तमिदम् । [4]तदुक्तमभियुक्तैः— "मो भो न्यौ गौ यदि कुटिलकमुक्तं वृत्तम् ।" प्रतिपादं मगणः भगणः नगणः यगणः गुरुद्वयं चेत्येतद् वृत्तं कुटिलकाख्यं भवतीत्यर्थः । ॥ १०८ ॥

## ( ओम् सहस्राक्षाय नमः )

अक्षशब्दः इन्द्रियसामान्यपरः । सहस्रशब्दश्चानन्त्यपरः । "शतं सहस्रमयुतमित्याद्यानन्त्यवाचकम्" [5]इत्युक्तेः । सहस्राणि अनन्तानि अक्षाणि इन्द्रियाणि यस्येत्यत्र सहस्रपदप्रयोगादर्थान्तरमपि सूचयन्नाह —

**अगणितकरचरणशिरोदंष्ट्रोदरयुक् प्रतिभय-**
**माश्चर्यं युगपत्सृष्टिस्थितिलय[6]कारि च यदवच्छेदकभेदेन ।**
**क्षेत्रे च सुवर्णाक्षे प्रथितं लिङ्गे शिव तव यद्रूपं**
**बहुविधकर्मज्ञानेन्द्रियपरिपूर्णं तदिति सहस्राक्षः ॥ १०९ ॥**

अगणितेत्यादि । अगणितैरसंख्यातैः करचरणशिरोदंष्ट्रोदराद्यवयवैर्युक्तं प्रतिभयं भयङ्करम् । "भयङ्करं प्रतिभयम्" इत्यमरः । आश्चर्य-

---

[1] वाक्यं (ख) [2] नास्ति (ख), व्यक्तपदवाच्यत्वम् इति पाठः (ग)
[3] कुटिलाख्य (क), कुटिलिकाख्यं (ख) [4] सूत्रं (ग)
[5] इत्युक्तम् (ग), इत्युक्तः (ख) [6] कास्ति (ग), कास्वि (ख)

माश्चर्यकरम्, आनन्दकारीति यावत्। तत्र हेतुमाह— **युगपदिति**। एककालावच्छेदेन सृष्टिस्थितिलयाख्यानि कार्याणि करोत्यारचयतीति तथा। नन्वत्र परस्परविरुद्धानां सृष्टिस्थित्युपसंहारादिकार्यविशेषाणां कथमेककालावच्छेदेनोपपत्तिरित्याशङ्क्य औपाधिकभेदान्न विरोध इत्याह—**यदवच्छेदकभेदेनेति**। यदिति प्रत्येकं पदम्। यद् रूपमुपदर्शितरीत्या विविधाश्चर्यकरमित्यर्थः। अवच्छेदकभेदेन [1]उपाधिभेदेन। **क्षेत्रे चेति**। यच्च रूपं [2]सुवर्णाक्षाभिधे क्षेत्रविशेषे [3]सहस्राक्षेश्वरत्वेन प्रसिद्धम्। यद्रूपं बहुविधैरनेकप्रकारैः कर्मेन्द्रियैः ज्ञानेन्द्रियैश्च परिपूर्णं व्याप्तं तत् तद्रूपं तवेति पूर्वान्वयि। तथा च यद्यद् रूपं श्रुतिस्मृत्यादौ गीयमानमने[4]काकारं तत्सर्वं त्वदीयमेवेति भवति। [5]सहस्राक्षत्वं परशिवस्येत्यर्थः। प्रपञ्चशरीरकस्य सर्वान्तर्यामिणो भगवतः परशिवस्य[5] सहस्राक्षत्वादिकं प्रतिपादितं श्रुत्यादिभिः। यथा—

> सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः।
> सर्वव्यापी च भगवान् तस्मात् सर्वगतः शिवः॥
>
> विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्।
> सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्॥ इति।

तथा **गीतायामपि** भगवद्वचनम् —

> सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्।
> सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति॥ इति।

इदं च आनन्दनामकं [6]मात्रावृत्तम्। तथा चोक्तं वृद्धैः —

---

[1] उपाधितभेदेन (ख) [2] सुवर्णाभिधे (ख;ग) [3] सहस्रात्वेन (क)
[4] ककारि (ख); काकारवत् सर्वं (ग) [5] नास्ति (क) [6] नास्ति (ग)

"सार्धैः सप्तगणैर्द्वाविंशत्या वसुभिर्मतमानन्दम् ।"

अत्र गणशब्दः [1]मात्राचतुष्टयपरः । न तु मयादिपरः । तथा च [2]अर्धमात्रागणसहितैः सप्तगणैः[2] प्रतिपादं [3]त्रिंशत्संख्याका मात्राः[3] । द्वाविंशत्या अष्टभिश्च यतिरित्येतद् वृत्तमानन्दनामकं मात्रावृत्तं भवतीत्यर्थः । अत्र षोडशभिः चतुर्दशभिश्च यतिरिति विशेषो द्रष्टव्यः इति ।

श्रुतिप्रसिद्धं [4]नाम । "नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे" इति । ॥ १०९ ॥

(ओम् सहस्रपदे नमः)

सहस्राणि पादाः किरणाः यस्येति सहस्रपात् । [5]सूर्यात्मकः इत्यभिप्रायेणाह —

जगदवनार्थमष्टसु धृतासु मूर्तिषु
स्मरहर भास्करस्य तव मूर्तिरष्टमी ।
गणनपथातिगाङ्घ्रिमय विश्वरूपधृक्
श्रुतिगदितोऽसि शङ्कर ततः सहस्रपात् ॥ ११० ॥

**जगदवनेत्यादि** । [6]जगदवनाय जगद्रक्षणार्थं शर्वभवरुद्राद्यष्टमूर्तिषु त्वया धृतास्वष्टमीयं सूर्यमूर्तिस्त्वदीया इत्यर्थः । अथवा सहस्रशब्दः अनन्तपरः । सहस्राण्यनन्ताः पादाः चरणाः यस्य तथेत्यभिप्रायेणाह— **गणनपथेति** । गणनानामेकत्वादिपरार्धपर्यन्तानां यः पन्थाः, तदतिक्रान्ताः ये अङ्घ्रयः पादाः तद्घटितं विश्वरूपं धारयतीति तथा । एतच्च सहस्राक्षपदे व्याख्यातम् । श्रुतिगदितः "सहस्राक्षः सहस्रपात्" (पुरुषसूक्तम्) इत्यादि-

---

[1] नास्ति (ग) [2] सार्धसप्तमात्रागणैः (ग) [3] त्रिंशन्मात्राः (ग)
[4] नामेदम् (ग) [5] सूर्यात्मा (ग) [6] नास्ति (क)

श्रुतिगदितः । स्पष्टमन्यत् । प्रभद्रकाख्यं वृत्तमिदम् । [1]तदुक्तमभियुक्तैः—"भवति नजौ भजौ रसहितौ प्रभद्रकम् ।" प्रतिपादं नगणः जगणः भगणः जगणः [2]रगणश्चेत्येतद् वृत्तं[2] प्रभद्रकाख्यं भवतीत्यर्थः । ॥ ११० ॥

## ( ओम् अपवर्गप्रदाय नमः )

अपवर्गान् सालोक्यसायुज्यसारूप्यसामीप्यकैवल्याख्याः पञ्चविध-[3]मुक्तीः प्रददात्युपासकेभ्य इत्यपवर्गप्रदः । तत्र पञ्चविधमुक्तीस्तत्साधनी-भूतोपासनानि च प्रदर्शयति —

> प्रतीकविदहंग्रहो भृतक इत्युपस्तिर्निजाद्
> विधेः शिवसलोकता शिवतदात्मतासार्ष्टिताः ।
> भवन्ति ससमीपता अमृततात्मविज्ञानतोऽ-
> खिलं फलमतो भवेदिति मतोऽपवर्गपदः ॥ १११ ॥

**प्रतीकविदिति** । भृतकः सेवकः निजाद् विधेः स्वस्वाश्रमविहित-तत्तत्कर्मोपासनाविधेः । तथा च प्रतीकोपासना, अहंग्रहोपासना, सेव्य-सेवकभावोपासना, स्वस्वाश्रमविहितकर्मोपासना चेत्युपासनाचतुष्टयं साधनत्वेन उपन्यस्य तत्फलान्यपि क्रमेणोपदर्शयति—**शिवसलोकतेत्यादि** । सलोकता सालोक्यम् । तदात्मता सायुज्यम् । सार्ष्टिता सारूप्यम् । [4]समानर्द्धितेति यावत् । तथा च तदात्मता च सार्ष्टिता चेति द्वन्द्वोत्तरं शिवपदेन षष्ठी-तत्पुरुषः । ततः शिवसलोकता च शिवतदात्मतासार्ष्टिता चेति पुनर्द्वन्द्वः । एताश्च [5]ससमीपताः सामीप्येन सहिता भवन्तीत्यन्वयः । शिवसालोक्यं, शिवसायुज्यं, शिवसारूप्यं, शिवसामीप्यं च क्रमेण भवन्ति फलानीत्यर्थः । अत्र च प्रतीकेष्ववयवेषु वाङ्मनःप्रभृतिषु देवतोपासनं प्रतीकोपासनम् ।

---

[1] नास्ति (ग) [2] रगणैस्सह [3] मुक्तिः (ख) [4] नमानर्द्वितेति (ग)
[5] समीपताः (ग)

तस्य फलं सालोक्यम् । सर्वज्ञत्वसर्वेश्वरत्वाद्यनन्तगुणगणके सगुणब्रह्मणि अहमेवेत्युपासनमहंग्रहोपासनम् । तस्य फलं सायुज्यम् । प्रतीकविदहंग्रहाभ्यां विना स्वात्मनः पृथक्त्वेन ऐश्वर्यविशेषविशिष्टतयोत्कर्षापकर्षपूर्वकमुपासनं भृतकोपासनम् । तस्य फलं सारूप्यम् । इदमेव सार्ष्टितेच्युच्यते ।

तथा च **तैत्तिरीयश्रुतिः** —

"एतासामेव देवतानाꣳसायुज्यꣳसार्ष्टिताꣳ
समानलोकतामाप्नोति" इति ।
कर्मोपासनाफलं च सामीप्यम् ।

तथा च [1]**माण्डूक्यश्रुतिः** —

तपःश्रद्धे ये ह्युपवसन्त्यरण्ये
शान्ता विद्वांसो भैक्षचर्यां चरन्तः ।
सूर्यद्वारेण ते विरजाः प्रयान्ति
यत्रामृतः स पुरुषोऽव्ययात्मा ।" इति ।

एताश्च कर्मफलभूताः सातिशयाः अनित्याश्चेत्यवगन्तव्यम् । इत्येवं सगुणब्रह्मोपासनादिफलमुक्त्वा निर्गुणब्रह्मोपासनायाः नित्यनिरतिशयानन्द-चित्प्रकाशाद्वैतपरंज्योतिःस्वरूपेणावस्थानलक्षणं कैवल्याख्यमपवर्गमाह — **अमृततेति** । तद्धेतुमाह—**आत्मविज्ञानत** इति । इदमेव निर्गुणब्रह्मो-पासनमित्युच्यते । तथा च **तैत्तिरीयश्रुतिः** —

"य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वादित्यस्य सायुज्यं गच्छति । अथ यो दक्षिणे प्रमीयते स पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं सलोकतामाप्नोति । एतौ वै सूर्याचन्द्रमसोर्महिमानौ

---

[1] माण्डूकश्रुतिः (ख,ग)

ब्राह्मणो विद्वानभिजयति । तस्मात् ब्रह्मणो महिमानमाप्नोति । [1]तस्माद्-ब्रह्मणो महिमानम्"[1] इति । अत्र केवलकर्मणा चन्द्रलोकप्राप्तिः । य एवं विद्वानिति विद्वच्छब्दाभिहितप्रतीकाद्युपासनात्रयवतो देवानां महिमानमित्यनेन सालोक्यादित्रयम् । "ब्राह्मणो विद्वान्" इत्यनेन ब्रह्मज्ञानवांस्तु एतौ कर्मोपासनाप्राप्यौ सूर्यचन्द्रयोर्महिमानौ सातिशयत्वादिदोषवन्तौ [2]बुध्वा अभि-जयति । अभितः पराकरोति । तस्मादधिकं [3]निरतिशयं ब्रह्मणो [4]महिमान-माप्नोतीत्यर्थः । तथा चोक्तं **शक्तिरहस्ये** —

आत्मबुद्ध्या प्रतीकेन मातृबुद्ध्याप्यहंधिया ।
कर्मणा वा भजन्मर्त्यः कैवल्यं पदमश्नुते ॥ इति ।

**अखिलं फलमिति** । दर्शितदिशा सालोक्यादिपञ्चविधमप्यपवर्ग-फलं परमशिवादेव भवतीति अपवर्गप्रदत्वं परमशिवस्येत्यर्थः ।

पृथ्वीसंज्ञकं वृत्तमिदम् । [5]तथा च पैङ्गलं सूत्रं[5]—पृथ्वी जसौ जसौ यलौ ग्वसुनवकौ । प्रतिपादं जगणः सगणः जगणः सगणः यगणः लघुर्गुरुश्च । अष्टभिर्नवभिश्च यतिरित्येतद् [6]वृत्तं पृथ्वीसंज्ञकं भवतीत्यर्थः । ॥ १११ ॥

**( ओम् अनन्ताय नमः )**[7]

अन्तः परिच्छेदः । स च देशतः कालतो वस्तुतश्चेति त्रिविधः । स न विद्यते यस्मिन् इत्यनन्तः ।

**नात्रेति विभो नेदानीमिति नेदं**
**ब्रह्मेति न वाचो यत्र प्रसरन्ति ।**

---

[1] नास्ति (क,ख) [2] बुद्ध्या (ख) [3] निरतिशयिनं (ख,ग) [4] नास्ति (ख)
[5] सूत्राभिहितम् (ग) [6] नास्ति (ग)
[7] एतन्नामसम्बन्धि पद्यं व्याख्यानं च न स्तः (ग)

**नास्त्येव गुणानामन्तो न विभूतेः**
**शेषोऽसि धराधृत्तेन त्वमनन्तः ॥ ११२ ॥**

**नात्रेति** । ब्रह्मेत्यनेनान्वयः ; नास्मिन् देशे ब्रह्म, नास्मिन् काले ब्रह्म, नेदं ब्रह्म इति वाचः यत्र यस्मिन् विषये न प्रसरन्ति । त्रिविधपरिच्छेदशून्यमित्यर्थः । "नित्यो नित्यानां चेतनश्चेतनानाम् ।"

"सर्वव्यापी च भगवान् तेन सर्वगतः शिवः ।"
"न स्त्री न षण्ढो न पुमान् ।" इत्यादि ।

अथवा गुणानां विभूतीनां वा अन्तः अवसानं नाशो वा यस्मिन्न विद्यते । नित्यनिरवधिकैश्वर्यगुणवान् इत्यभिप्रेत्याह—**नास्त्येव गुणानाम्** इति । "नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप" इति **गीतासु** ।

अथवा जगद्धारणार्थमवतरितः आदिशेषो वा अनन्त इत्याह—**शेषोऽहीति** । स्पष्टमन्यत् । इदं च श्रुतिप्रसिद्धं नाम । "सत्यं ज्ञानमनन्तं ब्रह्म" इति । मणिमालाख्यं वृत्तमिदम् । तथा च पैङ्गलं सूत्रम् । मणिमाला त्यौ त्यौ । प्रतिपादं तगणो यगणः तगणो यगणश्च इत्येतद् वृत्तं मणिमालाख्यं भवतीत्यर्थः । ॥ ११२ ॥

## (ओम् तारकाय नमः)

तारयत्युपासकान् संसारादिति तारकः, तारयतेर्ण्वुल् इत्याशयेनाह—

**तव पदकमले भजन्तो जनास्तारिता यत्त्वया**
**भवजलनिधितो महादेव ताराख्यवर्णात्मकः ।**
**प्रणवमुपदिशन् द्विजान् काशिकायां परेतानपि**
**श्रुतिषु निगदितस्तदन्वर्थनामा भवांस्तारकः ॥ ११३ ॥**

**तव पादकमले** इति । [1]द्वितीया द्विवचनमिदम् । भजधातोः सकर्मकत्वात् । भवजलनिधितः संसाराब्धेः तारिताः परमगतिं प्रापिताः इत्यन्वयः । **यदिति** । यद् यस्माद्धेतोः संसाराब्धेस्तारिताः सर्वेऽप्युपासकाः, अतस्त्वं तारक इत्यर्थः ।

अथवा तार एव तारकः । तारयतेः पचाद्यचि स्वार्थे कप्रत्ययः । प्रणवात्मक इत्यर्थः । अत एव श्रुतावपि तार इत्येव श्रूयते । "नमस्ताराय नमः शम्भवे च" इति । **अथर्वशिरस्यपि** अथ कस्मादुच्यते तारः इति । यद्वा तारः प्रणवः, तत्स्वरूप इत्यभिप्रायेणाह—**ताराख्यवर्णात्मक** इति । अथवा तारक इति उपदिशतीति तारकः । प्रणवोपदेशक इत्यर्थ इत्याशयेनाह—**प्रणवमुपदिशन्निति** । [2]अत एवोक्तम्—

अनिलो मृगनाभिरेणुगन्धिर्हरवामाङ्ककुचोत्तरीयजन्मा ।
हरते मरणश्रमं जनानामधिकाशि प्रणवोपदेशकाले ॥ इति ।[2]

**काशिकायां परेतानिति** । काश्यां मृतिं प्राप्तान् द्विजान् प्रणवोपदेशनेन परमगतिं प्रापयन् तारक इति श्रुतिषु निगदितोऽसीत्यर्थः । तथा चोक्तं **जाबालश्रुतौ**— अत्र हि जन्तोः [3]प्राणेषूत्क्रमेषु[3] रुद्रस्तारकं ब्रह्म व्याचष्टे । येनासावमृतीभूत्वा मोक्षी भवति इति ।[4] परेतानपि इत्यपिना मरणेन ज्ञानशून्यानपि जन्तून् यदि मोचयसि, किमु तर्हि साक्षाद् भवभजनैकसाधनावधूतकल्मषान् उन्मिषद्विद्याङ्कुरान् नरवरांस्तथा करोषीयत्र वक्तव्यम् ? इत्ययमर्थः सूचितः । स्पष्टं शिष्टम् । लालसाख्यं वृत्तमिदम् ।

---

[1] द्वितीयान्तं द्विवचनमिदम् (क) [2] नास्ति (क) [3] प्राणेषूत्क्रमणेषु (ख,ग)
[4] द्विजशब्दस्त्रैवर्णिकपरः । अन्येषां प्रणवेऽनधिकारात् । अत एव तेषां रामनामोपदेश इति व्यवस्था ग्रन्थान्तरैरुपपादिता । प्रणवरामशब्दयोः परब्रह्मैकबोधकत्वाच्छ्रुतौ तारकब्रह्मेति तु उभयसाधारणमिति खपुस्तके अधिकं दृश्यते ।

तथा च पैङ्गलैरुक्तम्— दशवसुविरतिर्ननोरैश्चतुर्भिर्युता लालसा । प्रतिपादं नगणद्वयं रगणचतुष्टयं च, दशभिरष्टभिश्च यतिरित्येतद् वृत्तं लालसाख्यं भवतीत्यर्थः । ॥ ११३ ॥

## ( ओम् परमेश्वराय नमः )

परमश्चासावीश्वरश्चेति कर्मधारयः । नियामकत्वलक्षणे वा ईश्वरत्वे परमत्वं च नियामकान्तरासंभावनाविषयत्वम्, अखिलजगत्कर्मकसंरक्षकत्वं चेत्याशयेनाह —

**ग्रामाणां पतयोऽपि सोपपदेश्वरा भुवि भूरिश-**
**स्तेऽपि स्वाश्रितमात्रपोषपरास्तथैव दिवौकसः ।**
**ईशानामपि चेशितासि निजाश्रिताश्रिततच्छ्रितान्**
**सर्वानप्यवसीशता परमावधिः परमेश्वरः ॥ ११४ ॥**

**ग्रामाणां पतय** इत्यादि । ग्रामाणां पतयोऽपि इत्यपिना नगरदेशद्वीपलोकादीनां समुच्चयः । पतयः ईश्वराः । सोपपदेश्वराः साविधकेश्वराः । तथा च ग्रामस्य नगरस्य द्वीपस्य लोकस्य वा नियामकत्वेन ईश्वरत्वाभिमानिनो ये केचित् सर्वेऽपि नियामकान्तरसंभावनाविषयीकृता एवेति नैषां निरवधिकमीश्वरत्वं सम्भवति इत्युक्त्वा सर्वजनसंरक्षकत्वलक्षणं द्वितीयमपीश्वरत्वं नास्तीत्याह—**तेऽपीति** । तेऽपि ग्रामाधिपतयोऽपि स्वाश्रितमात्रपोषपराः ग्रामादीनामेव पोषणे समर्थाः, न तु सर्वान् पोषयितुं तथा । एवं च सर्वजन-[1]संरक्षकत्वलक्षणं द्वितीयमीश्वरत्वमपि नैतेषां संभवतीति भावः । **तथैव दिवौकसः** । एवमेव देवादयोऽपि । उपदर्शितद्विविधैश्वर्यशून्या एवेति भावः । एवं च क्लृप्तानां देवतिर्यङ्मनुष्याणां बाधे कल्प्यमेकं सिध्यतीति

[1] संरक्षकत्वं (ग)

न्यायात् परमशिवस्यैव तादृशोभयविधमप्यैश्वर्यं संभवतीत्याह—**ईशाना-मपीति**। ईशानां नियामकत्वेन संरक्षकत्वेन वा उपदर्शितानां तत्तद्ग्राम [1]लोकाधिपानाम् ईशिता नियामकः। तथा चार्थतः सर्वेषां नियामक इति पर्यवसानान्नियामकान्तरासम्भावनाविषयीभूतेश्वरत्वलक्षणं परमैश्वर्यमाद्यमुक्तं भवति। **निजाश्रितेत्यादि**। निजं [2]स्वमाश्रिताः ये देवतिर्यङ्मनुष्यादयः, तदाश्रिताश्च ये पुनस्तानप्याश्रितानप्याश्रिताः। तथा च साक्षात् परम्परया वा सर्वानपि लोकानवसि रक्षसीति सर्वलोकसंरक्षणकर्तृत्वरूपं द्वितीयामपि पारमैश्वर्यमुक्तं भवति। अत एवाह—**ईशतापरमावधिरिति**। ईशता [3]ईशनं नियामकत्वं संरक्षकत्वं [4]वेत्यन्यदेतत्। तस्य परमावधिः। यदपेक्षया नियामकः संरक्षको वा नास्ति, तादृशः परमेश्वर इत्यर्थः। हरिणप्लुताख्यं वृत्तमिदम्। [5]तदुक्तमभियुक्तैः —

"मात् सौ जौ च भरौ च दन्तिशरेषुभिर्हरिणप्लुता।"[6]

प्रतिपादं मगणः सगणः जगणद्वयं भगणः रगणश्च। अष्टभिः पञ्चभिश्च पादयतिरित्येतद् वृत्तं हरिणप्लुताख्यं भवतीत्यर्थः ॥ ११४ ॥

॥ इति सर्वं शिवम् ॥

अथैतदुत्तरभागः **शिवरहस्ये** पठितो व्याक्रियते—

**इमानि दिव्यनामानि जप्यन्ते सर्वदा मया।**

इमानि उपदर्शिताष्टोत्तरशतसंख्याकानि, सर्वदा कालत्रयेऽपि, मया विष्णुना।

**नामकल्पलतेयं मे सर्वाभीष्टप्रदायिनी**। मे मह्यम्।

---

[1] लोकादपालानाम् (ख) [2] समाश्रिताः (ख) [3] नास्ति (ग)
[4] चेत्यन्यदेव (ग) [5] नास्ति (ग) [6] इति सूत्रम्—इत्यधिकम् (ग)

नामान्येतानि सुभगे शिवदानि न संशयः ।
वेदसर्वस्वभूतानि नामान्येतानि वस्तुतः ।
एतानि यानि नामानि तानि सर्वार्थदान्यतः ।
जप्यन्ते सादरं नित्यं मया नियमपूर्वकम् ।
वेदेषु शिवनामानि [1]श्रेष्ठान्यघ[1]हराणि च ।
सन्त्यनन्तानि सुभगे वेदेषु विविधेष्वपि ।

विविधशाखात्मकेषु वेदेष्वित्यर्थः । एतस्य [2]वेदशब्दस्य शाखापरत्वात् ।

तेभ्यो नामानि संगृह्य कुमाराय महेश्वरः ।
अष्टोत्तरसहस्रं तु नाम्नामुपदिशत् पुरा ॥
ततोऽपि सारमुद्धृत्याब्रवीदष्टोत्तरं शतम् ।

अडभावः छान्दसः ।

तानि नामानि जप्यन्ते मया प्रत्यहमादरात् ॥
इत्युक्त्वा प्रणिपत्याम्बां संपूज्य च जनार्दनः ।
ततो जगाम वैकुण्ठं प्रेषितो जगदम्बया ।
शिवमाराधयन्ती सा [3]गिरिजापि ततः शिवम् ।
संप्राप्ता शिवरूपं सा भूयः प्राप्तशिवापि सा ।

नित्यप्राप्तशिवरूपापि सा शिवा सर्वानपि लोकान् परमशिवाराधनादीन् प्रापयितुं परमशिवमाराधयन्ती भूयः प्राप्तेवाभूद् इत्यर्थः ।

अथ [4]शङ्करसंहितायाश्च उत्तरभागो व्याख्यायते—

---

[1] श्रेष्ठान्यथ (ख), श्रेष्ठाद्यन्यं (क) [2] वेदस्य (ग) [3] पतितः (ख,ग)
[4] शङ्करसंहितास्थः (ख,ग)

**एतदष्टोत्तरशतं नाम्नामाम्नायसम्मितम् ।**

[1]एतदिति । आम्नायैर्वेदैः सम्मितं सम्यक् बोधितम् । वेदैकसंवेद्यार्थप्रतिपादकमित्यर्थः ।

**यद्यदिच्छसि देवेशि तदनेनैव यास्यसि ।**

यास्यसि प्राप्स्यसीत्यर्थः ।

श्रीसूतः —

**शङ्करस्य प्रिया गौरी जप्त्वा कालत्रयं सदा ।**

जप्त्वेति । आगमशास्त्रस्यानित्यत्वादिडभावः । कालत्रयं सदेत्यत्र सदाशब्दः प्रत्यहपरः । प्रत्यहं प्रातर्मध्याह्न[2]सायाह्नाख्यकालत्रयेऽपि जपित्वेत्यर्थः ।

**नारायणोपदेशेन सा सिद्धिं परमां गता ।**
**समावाप्य शरीरार्धं प्रसादाच्छूल[3]धारिणः ॥**
**ततः प्रभृति लोकेऽस्मिन् अर्धनारीश्वरः शिवः ।**
**यस्त्रिसन्ध्यं पठेच्छम्भोर्नाम्नामष्टोत्तरं शतम् ॥**
**स सर्वकामानाप्नोति भुक्तिं मुक्तिं च विन्दति ।**
**[4]शतरुद्रियत्रिरावृत्त्या यत्फलं प्राप्यते नरैः ॥**
**तत्फलं [5]प्राप्नुयादेतदेकावृत्त्या पठन्नरः ।**

शतं रुद्राः प्रतिपाद्यत्वेन सन्ति यस्मिन्निति शतरुद्रः । "नमस्ते रुद्र मन्यव" इत्यनुवाकसमूहः । यद्यप्यत्र हिरण्यबाहुप्रमुखाः शताधिका एव प्रतिपाद्यन्त इति **ब्रह्माण्डपुराणोत्तरे**—

---

[1] नास्ति (क,ख) [2] सायाख्य (क,ग) [3] पाणिनः (ग) [4] शतरुद्र (ख,ग)
[5] प्राप्नुयादेनमेकावृत्त्या (क,ख)

"षोडशावरणं चक्रं किं तद्रुद्राधिदैवतम्"

इत्यध्याये श्रूयते । तथापि शताधिकयोजनवत्यपि सागरे—

शतयोजनविस्तीर्णः सागरः समलंकृतः । इतिवत् [1]शतशब्दः द्वितीय-[2]शताभावमात्रतात्पर्यको द्रष्टव्यः । "शतरुद्राद् घश्च" इति तद्धितः । "न वा एकेनाक्षरेण छन्दांसि वियन्ति" इति श्रुतेः एकाक्षराधिक्येऽपि न छन्दोभङ्ग इति छन्दोभाष्यवार्तिकराजयोः स्पष्टम् ।

धन्यः स एव लोकेऽस्मिन् यस्य भक्तिः शिवे भवेत् ।
समाराध्य सदा साम्बं ब्रह्म विन्दति शाश्वतम् ॥

सकृद्वा पूजयेल्लिङ्गं यस्तु भक्तिसमन्वितः ।
कुलकोटिं समुद्धृत्य स याति परमां गतिम् ॥

बिल्वपत्रैः प्रशस्तैर्वा पुष्पैश्च तुलसीदलैः ।
तिलाक्षतैर्यजेदेभिर्जीवन्मुक्तो न संशयः ॥

नाम्नामेषां पशुपतेरेकमेवापवर्गदम् ।
अन्येषां चैव शिष्टानां फलं वक्तुं क ईशते ॥

एकैकमपि चेन्नाम यद्यपवर्गप्रदायकं भवेत्, किमेतैः सर्वैरपि नामभिः [3]परमशिवमन्वहमाराधयतः पुरुषधौरेयस्य फलं के वा, वक्तुमीशते समर्था भवन्ति ? न कोऽपीत्यर्थ इति । श्रीः ।

इत्येवं परमशिवाष्टोत्तरशतदिव्यामृतनाम्नामाम्नायैकमानगम्यानामनवरत-मखण्डायमानाभिनवानन्दरसनिर्भरानुभविकान् अनेकभङ्गिभेदभिन्नाभिप्राय-विषयीभूतान् अप्यर्थान् अनुसन्धाय पुनस्तदपर्यवसितान्तराह्लादवदनेकापरि-मितानन्दलीलाविग्रहस्य अनादितेजःपुञ्जात्मकानन्तरूपधारिणः परंज्योतिषः

---

[1] शतरुद्रः (ग) [2] शताधिभावमात्र (ख,ग) [3] परमशिवमारधयतः (ग)

परमशिवस्य अपारवैभवोल्लसदमृतार्णवतरङ्गायमाननामरुचिबलपराक्रमातिशयविशेषान् अशेषेण परिज्ञातुमीशाः ये दधीचिप्रभृतयो महर्षयस्त एव धन्याः कृतार्थाः । परमशिवभावैक्यभाजनानि च इति अन्यापदेशस्तुतिव्याजेन अचिन्त्यापरिमितशक्तिप्रतापमावेदयन् पुनः परम[1]शिवमेव प्रस्तौति ।

जानाति साम्ब तव नामरुचिं दधीचि-
र्जानाति ते पदनखाग्रबलं दशास्यः ।
जानाति दोर्बलपराक्रमेष मेरु-
र्जानन्त्यमोघपटुबाणगतिं पुराणि ॥ ११५ ॥

जानातीति । अत्रायमभिसन्धिः । पुरा हि ब्रह्मणः क्षुतादुत्पन्नः क्षुपाख्यो विष्णुपरायणः कश्चित् क्षत्रियः, दधीचिरिति च कश्चिद् ब्रह्मऋषिः परमशिवभक्ताग्रगण्यः । तयोश्च परस्परं "क्षत्रियो वरिष्ठः ब्राह्मणो वा" इति चिरं विवादे संवृत्ते विष्णुपरायणः [2]सर्वोत्कृष्टबलपरा[3]क्रमातिशयवान् अहमेवैको वरिष्ठो नान्य इत्यभिमन्यमानं क्षुपाख्यं राजानं क्रोधारक्तलोचनो ब्रह्मर्षिस्तद्वाक्यमसहमानो वाममुष्टिना समताडयत् । सोऽपि कुलिशेन विप्रऋषिं पुनरताडयत् । एवं परस्परप्राप्तप्रहारयोस्तयोरन्तः खिन्नमनाः ब्राह्मणः क्षत्रियेण पराजितः सन् परमशिवाराधनैकबललब्धवरावध्यकायः सन् क्षुपाख्यं राजानं वामपादेनाताडयत् । सोऽपि चिरकालं विष्णुमाराध्य तल्लब्धवरोऽपि महर्षिविषयावगुण्ठितसामर्थ्यवानेवासीत् इति स्वयमेव साक्षादनादिपुरुषो विष्णुः आत्मीयचक्रायुधप्रभृतीन्यमोघास्त्राण्यमोचयत् । तान्यपि दधीचिप्रमुक्तपरमशिवनामाङ्कितैः कुशमयैः शरैः स्तब्धवीर्याण्यकिञ्चित्कराण्येवाभवन्नित्या[4]लोक्य परमशिवनामभजनबलप्रभावलभ्यमिदं सामर्थ्यमनन्यलभ्य-

---

[1] शिवनाम (ख) [2] कश्चित्क्षत्रियः सर्वो ........ (ग) [3] क्रपवात् (ग)
[4] लोच्य (ख,ग)

मेवेत्याशङ्क्य परमशिवभजनैकपरायणं दधीच्याख्यं ब्रह्मर्षिमेव पुनरनुससारेत्यादिक्रमशेषेण प्रपञ्चितं लैङ्गे ।

ब्रह्मपुत्रो महातेजाः राजा क्षुप इति स्मृतः ।
अभून्मित्रं दधीचस्य मुनीन्द्रस्य नरेश्वरः ॥
चिरन्तनः प्रसङ्गाद्वै वादः क्षुपदधीचयोः ।
अभवत् क्षत्रियः श्रेष्ठो विप्र एवेति सुव्रत ॥
अष्टानामपि लोकानां वपुर्धारयते नृपः । इत्यादिना,
जगाम भगवान् विष्णुः प्रणिपत्य महामुनिम् ।
क्षुपो दुःखातुरो भूत्वा सुसंपूज्य मुनीश्वरम् ॥
दधीचमभिवाद्याशु प्रार्थयामास विह्वलः ॥ इत्यनेन ।

तथा दशास्यो नाम रावणः संग्रामनिर्जिताखिलसुरासुरौघबलवानपि कदाचित् कैलासाचलं गच्छन् स्तब्धगतिकं पुष्पकमवलोक्य किमेतदत्याश्चर्यं कथमकाण्डनिष्पन्दं पुष्पकमित्यन्तः चिन्तयमानः तदवसरप्राप्तनन्दिकेश्वरमुखोद्गतं "निवर्तस्व दशग्रीव शैले क्रीडति शङ्करः" इत्यादिवाक्यमाकर्णयन् अमर्षताम्रनयनः पुष्पकादवरुह्य "कोऽयं शङ्करः" इत्याभाटयन् भुजाभ्यां कैलासमीषदुत्तोलयामास । ततश्च भगवान् परमशिवस्त[1]त्कृतं दौष्ट्यमालोक्य[1] प्रहसन् [2]पादांगुष्ठमूलेन पर्वतान्तः संपीड्य पुनश्चिरकालं सामभिर्विविधैः स्तोत्रैः संस्तुतः सन् पुनर्मोचयामास । इत्यादिकं प्रतिपादितं रामायणोत्तरकाण्डे ।

अथापश्यद्दशग्रीवो रौक्मं [3]शरवणं तदा ।
गभस्तिजालसंवीतं द्वितीयमिव भास्करम् ॥ इत्यादिना ।
संवत्सरसहस्रं तु स्तुवतो रक्षसो गतम् ।
ततः प्रीतो महादेवः शैलाग्रेऽधिष्ठितस्तदा ॥

---

[1] तद्दौष्ट्यमवलोक्य (ग) [2] पादांगुष्ठाग्रेण (ग) [3] दारवणं (ख,ग)

[1]मुक्त्वा तस्य भुजान् राजन् प्राह वाक्यं दशाननम् । इत्यन्तेन । एवं विद्युन्मालितारकाक्ष—कमलाक्षाख्यासुराधिष्ठितानि काञ्चनरौप्यायसमयानि ब्रह्मदत्तवरलब्धानि यानि पुराणि तानि च त्रिपुरविजयावसरोद्युक्तबाणानुसन्धानमात्रेणैव एकीभूय विनष्टानि इत्येतत्प्रसिद्धं लैङ्गे । यथा—

ततस्ते सहिता दैत्याः [2]संप्रधार्य परस्परम् ।
ब्रह्माणमभवन् दैत्याः[3] प्रणिपत्य जगद्गुरुम्[3] ॥

वरं पुराणि त्रीण्येव समास्थाय महीमिमाम् ।
चरिष्यामो हि लोकेश [4]त्वत्प्रसादाज्जगद्गुरो ॥

तथा वर्षसहस्रेषु समेष्यामः परस्परम् ।
एकीभावं गमिष्यन्ति पुराण्येतानि [5]चक्षुषा ॥

यदा समानि चैतानि यो हन्याद् भगवंस्तदा ।
एकेनैवेषुणा देव स नो मृत्युर्भविष्यति ॥

एवमस्त्विति तान् देवः प्रत्यक्षात्माविशद्दिवम् । इति ।

श्रुतिस्मृत्यादिप्रसिद्धफलकपरमशिवस्तुत्यन्तरापेक्षया प्रकृतस्तोत्रस्य फलविशेषप्रदर्शनमुखेनेतरापेक्षया उत्कृष्टत्वं दर्शयति [6]इयं शम्भोरिति[6] ।

**इयं शम्भोरष्टोत्तरशतकनामार्थविवृति-**
**विंजातीयैरष्टोत्तरशतकवृत्तैर्विरचिता ।**
**फलं नामस्वर्थावगतिषु च भूम्नैव विदितं**
**बहूनां वृत्तानां प्रमितिरधिकाप्यत्र फलति ॥ ११६ ॥**

---

[1] भङ्क्त्वा (ग), भुंक्त्वा (ख) [2] नास्ति (ख) [3] नास्ति (ग)
[4] वः प्रसादात् (ग) [5] चानुष (ख), चानघ (क) [6] नास्ति (क), इयमित्यादिना (ग)

शिवादिपरमेश्वरान्तान्यष्टोत्तरशतसंख्याकानि यानि नामानि, तेषां येऽर्थाः नैर्मल्यादिपारमैश्वर्यान्तास्तेषां विवृतिर्निरुक्तिः विजातीयैः परस्परं भिन्नैः। अष्टोत्तरशतसंख्याकैर्वृत्तैर्विरचितेत्यन्वयः।

**फलमिति**। तत्तन्नाम्नां तत्प्रतिपाद्यार्थविशेषावगतीनां च तत्तत्-श्रुतिस्मृत्यागमादिषु भूरिशः प्रतिपादितमित्यर्थः। तथा च श्रुतिः— "अपि वा यश्चण्डालः शिव इति वाचं वदेत् तेन सह संवसेत्, तेन सह संवदेत्, तेन सह भुञ्जीत" इति।

> महापातकविच्छित्त्यै शिव इत्यक्षरद्वयम्।
> अलं नमस्क्रियायुक्तो मुक्तये कल्पितो मनुः॥

इत्येवमाद्याः स्मृतयः प्रागुपदर्शिताः अन्याश्चागमपुराणस्मृतिषु पारे-परार्धमवगन्तव्याः। **बहूनामिति**। शिखरिण्यादिहरिणप्लुतान्ताष्टोत्तर-शतसंख्याकवृत्तानां प्रमितिः परमत्राधिकेत्यर्थः। तथा चेतरसाधारणसिद्ध-फलापेक्षयात्र वृत्तविशेषविज्ञानस्यैव अधिकफलत्वोक्त्या परमशिवभजनैक-तत्पराणां नराणां स्वभावत एव तत्तत्स्तोत्रादौ प्रवृत्तिसंभवेऽपि अस्यां स्तुतौ लौकिकालौकिकसाधारणाखिलविद्वल्लोकप्रवृत्तिविषयत्वव्यञ्जनेन सर्वोत्कृष्टत्वमेत-त्स्तोत्रस्येत्यर्थः। ॥ ११७॥

एवं स्तोत्रोत्कर्षमुक्त्वा तत्कर्तृनामोक्तिपूर्वकं "नाम्नामष्टशतं निरुच्य जनुषः साफल्यमीहेतमाम्" इति प्रागुपक्रान्तमुपसंहरति—इतीति।

**इति काशिनिवासिसाग्निचित्यक्रतुकृद्भास्कररायभारती।**
**जनुषः सफलत्वसिद्धये शिवनामाष्टशतं व्यवर्वरीत्॥ ११७॥**

अग्निचित्येन सहितं क्रतुं करोतीति साग्निचित्यक्रतुकृत्। काशि-निवासी चासौ स चेति तथा। भारत्यन्तमेकं पदं वा। भारतीति कर्तु-

रुपनाम । भास्कररायस्य भारती वाणीति वार्थः । सैव ग्रन्थकर्त्रीति यावत् । व्यवर्वरीत् । विवृतवान् । वृणोतेर्व्युपसृष्टाद्यङ्लुकि लुङि रूपम् । अत्र प्रथमश्चरण औपच्छन्दसिकस्य, इतरे त्रयो वैतालीयस्य । अत एव काशीति पदस्य ह्रस्वान्तः पाठः छन्दोऽनुरोधात् कविसमयसिद्धः ।

" मधुस्रवगुडूचि[1]पाटान्वितम् " इति वाग्भटेन,

" [2]न च[2] सप्तमिशल्यलवोपहता " इति भोजराजेन,

" [3]रतिदूतिपदेन[3] कोकिलान् "

इति कालिदासेन अन्यैश्च बहुशः प्रयुक्तत्वात् । " छन्दो व्याकरणयोर्विरोधे छन्दो बलीयः " इत्यर्थस्येयादिपूरण इति सूत्रे वार्तिकराजभाष्यराजयोः समर्थनात् । ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् (६-३-६३) इति सूत्राद् बाहुलको ह्रस्व इत्यप्याहुरिति सर्वं शिवम् ।

श्रीमच्छङ्करसंहिताशिवरहस्यादिप्रसिद्धात्मनां
नाम्नामष्टशतस्य [4]साष्टक[4]शतश्लोक्या निरुक्तिं व्यधात् ।
श्रीभारत्युपनामभास्करकृती तां विस्तराद्दुस्तरां
व्याचख्यौ पटु वेङ्कटाचलपतिः काशीपतिप्रीतये ॥

शिवनामकल्पवल्ल्या भास्करकविरालवाल[5]माबध्नात्[5] ।
तद्वेङ्कटाचल[6]सुधीः सुधाभिरापूरयामास ॥

इति श्रीवेङ्कटाचलसूरिप्रणीतः श्रीशिव[7]नाम[7]कल्पलतालवालसुधापूरः समाप्तः ।

---

[1] पाष्ठान्विम् (ख), पाठान्वितम् (ग) [2] नास्ति (ग) [3] इतिपदेन (ग)
[4] षोडश (ख,ग) [5] मधात् (ग) [6] पतिः (क) [7] नास्ति (ख,ग)

[1] श्रीसौराष्ट्रसोमेश्वरपादारविन्दार्पणमस्तु ।

श्रीकाशीविश्वेश्वराय नमः ।
श्रीपार्वतीपरमेश्वराय नमः । श्रीरस्तु ।

स्वस्ति श्रीमन्नृपशालीवाहनशके १८६८ दुर्मुखनामसंवत्सरे पुष्यकृष्णपक्षे चतुर्दश्यां शनौ वासरे श्रवणर्क्षे शिवाष्टोत्तरशतदिव्यनामामृतस्तोत्रं सव्याख्यानं समाप्तम् ।

श्रीसीतालक्ष्मणहनुमदादिसहितरामार्पणमस्तु ।
लक्ष्मेश्वरस्थवसिष्ठगोत्रोत्पन्न पुराणिकोपनामक नारायणात्मजानन्तेन लिखितं ज्ञेयम् ।[1]



[1] अयं भागः अधिकतया गपुस्तके दृश्यते ।

## अनुबन्धः—१

(ओम् । शुद्धविग्रहाय नमः इति नामारभ्य चतुर्णां नाम्नां व्याख्यानं रामचन्द्राख्येनान्येन व्याख्यात्रा रचितं गपुस्तके समुपलभ्यते यथा—)

### ओम् । गुरुभ्यो नमः ।

सकलवृन्दारकवन्दितचरणश्रीरमारमणकृतश्रीगौरीप्रश्नोत्तराख्यश्रीमदुमारमणनामामृतकल्पलतिकायाः श्रीमद्गम्भीररायभारतीदीक्षितार्यवर्यात्मजवैभवोल्लासितभारतीविलासास्पदश्रीमद्भास्कररायदीक्षिताग्निचित्परमेश्वरभक्ताग्रगण्यकृतशिवनामनिर्वचनरत्नालवालाख्यस्तोत्रस्य विद्वच्चक्रचूडामणिश्रीमद्वेङ्कटार्यप्रणीतसुधापूराभिधव्याख्या कृष्णातुङ्गोभयनदीमध्यदेशीयप्रत्यन्तरेषु शुद्धविग्रह इत्यारभ्याजान्तनामचतुष्टयस्य प्रमादाद् गलिता । एतन्नामचतुष्टयस्यैव सुधापूरो नास्तीति विचार्य लक्ष्मीपुरनिवासि श्रीमद्भारद्वाजकुलावतंसशिवदैवज्ञात्मजरामचन्द्रेण श्रीमदुपासनामूर्तिकृपया श्रीसद्गुरुचरणारविन्दानुग्रहेण च यथामति नामचतुष्टयस्य कृता व्याख्या श्रीसाम्बचरणारविन्देऽपिं तेयं शुद्धाशुद्धपूर्वकं विचारेणैव अङ्गीकार्येति मदीया नतिर्विद्वज्जनवृन्दस्यास्त्विति प्रार्थना ।

### ओम् शुद्धविग्रहाय नमः ।

घनघृतमिव सत्त्वमात्रपिण्डो
न तु वपुरण्वपि ते रजस्तमोक्तम् ।
शिव भवसि च नैव कूटयोधी
हरसि मलानि (ति) शुद्धविग्रहस्त्वम् ॥ ८६ ॥

अयुजि नयुगरेफतो यकारो
युजि च नजौ जरगाश्च पुष्पिताग्रा । लक्षणसाम्यादौपच्छन्दसिकम् ।

ओम् शाश्वताय नमः ।

पूर्वतो जगतो जनेः सर्वसंहारतः परे ।
वर्तमाने जगत्यपि त्वमस्येवेति शाश्वतः ॥ ८७ ॥

सैतवस्याखिलेष्वपीति सैतवाचार्यमतेन अष्टाक्षरपादेषु चतुर्थाक्षरोत्तरं त-भ-ज-नानाम् अन्यतमो गणश्चेत् सैतवात्मिका विपुला भवति । प्रकृते जगणस्य सत्वात् जविपुला ।

ओम् खण्डपरशवे नमः ।

गजासुरवधे खण्डास्तव जाताः परशवः ।
तदारभ्याखिलैर्देवैर्गीयसे खण्डपरशुः ॥ ८८ ॥

अष्टाक्षरपादेषु समपादयोश्चतुरक्षरोत्तरं यगणो वा जगणो वा । विषमयोस्तु नगणश्चेत् चपलाख्यं भवति । चपलायुजो न् इति पैङ्गलसूत्रात् ।

ओम् अजाय नमः ।

न जनिः शिव ते । तदसि त्वमजः ॥

पाञ्चालाख्यं वृत्तम् । तथोक्तमभियुक्तैः —

प्रकृतेष्वष्टभिः पद्यैर्गोकर्णा च शशिप्रभा ।
रमणं चैव पाञ्चाली मृगेन्द्रश्चैव पञ्जरः ॥
कामलं चैव संज्ञा च वृत्ताष्टकमुदीरितम् ॥ इति ।

प्राकृतेषु सूत्रेषु वृत्ताष्टकमिति प्रकृते च सगणचतुष्टयत्वात् पाञ्चालाख्यम् ।

ओम् पाशविमोचकाय नमः ।

अभिमतगुणपञ्चपर्व्दशत्रिचतुरयुतविंशतिपाशतः ।
शिव पदभजनेन विमोचयन् पशुगणमिति पाशविमोचकः ॥

नवभरसहिताभिहितोज्ज्वलेति ॥ ९० ॥

घन .... .... .... .... शुद्धविग्रहस्त्वम् ॥ ८६ ॥

अथ शुद्धविग्रह इत्यत्र सत्तामात्रशरीर इत्यर्थे पूर्वनाम्ना एकार्थतया पुनरुक्तिसम्भवादन्यां [1]व्युत्पत्तिम् आश्रित्याह — **सत्त्वमात्रपिण्ड** इति । सत्त्वपदं शुद्धसत्त्वगुणपरम् । सत्त्वमेव सत्त्वमात्रम् । मात्रच्प्रत्ययः अवधारणार्थः । तथा च सत्त्वरजस्तमोऽतिरिक्तं सत्त्वं शुद्धपदेन विवक्षितम् । शुद्धः शुद्धसत्त्वोपेतः विग्रहो यस्य सः, सत्त्वशरीर इत्यर्थः ।

किमिव ? घनघृतमिव । घनं च तत् घृतं च घनघृतम् । निबिडघृतवत् परमशिवनिष्ठसर्वव्यापितारूपसाधारणधर्मसाम्याद् घृतं दृष्टान्तत्वेन कल्पितम् । अत्र श्रुतिः —

स्नेहो यथा मांसखण्डं व्याप्नोति व्यापयत्यपि ।
सर्वान् लोकानहं तद्वत् सर्वव्यापी ततोऽस्म्यहम् ॥

सत्त्वमात्रपिण्ड इत्यत्र पिण्डशब्देन करचरणाद्यवयवाभावः सूचितः । उक्तं च **शिवगीतायाम्** —

उपाणिपादोऽहमचिन्त्यशक्तिः ।
पश्याम्यचक्षुः स श्रृणोम्यकर्णः ॥

एतेन परमेश्वरस्य गुणत्रयातीतत्वं सूचितमित्यर्थः । तथा **अथर्वशिरसि** —" त्वं गुणत्रयातीतः " । अत्र शिव इति सम्बुद्धिः । वश कान्तावित्यस्माद्धातोः शिवशब्दो निष्पन्नः यथोक्तम् —

हिंसधातोः सिंहशब्दः वशिकान्तेः शिवः स्मृतः ।
वर्णव्यत्ययतः सिद्धः पश्यकः कश्यपो यथा ॥

---

[1] वित्पत्तीन् इति मातृकापाठः

वशति प्रकाशते इति शिवः, स्वयंप्रकाश इत्यर्थः

यद्वा प्रपञ्चं स्वस्मिन् प्रकाशयतीति शिवः ।

प्रपञ्चात्मकस्य जगतः आधारभूत इत्यर्थः ।

तस्माज्जगन्निर्माणे त्रिगुणात्मकमायानुसरणम् ।

तेन जायापतिन्यायेन शिवशक्त्योः प्रपञ्चात्मक-सन्तानरूपजगन्निर्मा
गुणत्रयानुसन्धानम् ।

तनुत्रयाङ्गीकारोऽपि परमशिवस्याप्यावश्यक इत्यत आह— न त
वपुरित्यादिना । **रजस्तमोक्तम्** । रजश्च तमश्च रजस्तमसी । रज
स्तमोभ्याम् अक्तं रजस्तमोऽक्तम् । रजः रजोगुणः, तमः तमोगुणः
आभ्यां मिश्रितं वपुः मांसास्थिरक्तवसामज्जादिप्रधानः स्थूलदेहोऽपि । ते तव
न तु नास्ति । तथा अण्वपि । अपिशब्दः समुच्चयार्थः । तेन कारण
देहस्यापि ग्रहणम् । सप्तदशकलात्मकसूक्ष्मदेहः । अनादिवासनारूपकारण
देहोऽपि तव न सम्भवतीत्यर्थः । प्रथमव्युत्पत्याश्रयणेन तेजोमयशरीरत्वा
शुद्धविग्रह इत्यत्र शुद्धो विग्रहो यस्य स इति देहत्रयातीत इत्यर्थः
एतदर्थं प्रतिपादितमथर्वशिरसि —

त्वं देहत्रयातीतः । परशिव एव अनाद्यविद्यासम्बन्धेन चतुर्विधदेहे
जीवत्वेन विद्यमानस्सन् अहं भोक्ता अहं कर्तेति प्रतीतिविषयो भवसि
त्याशङ्क्याह —

कूटं कूटस्थचैतन्यं तत्प्रति अहं कर्ता अहं भोक्ता इति युध्यते इ
कूटयोधी जीवः । स त्वं न भवसीत्यर्थः ।

कूटस्थानीह कर्माणि कोटिजन्मार्जितान्यपि ।
ज्ञानेनैव विनश्यन्ति न तु कर्मायुतैरपि ॥ इति ।

अथवा कूटं—ब्रह्म सत्यं जगन्मिथ्येत्याकारकं ज्ञानम् । अनाद्य-विद्यावशादहमेव कर्ता अहमेव भोक्तेति शुद्धज्ञानं प्रति युध्यत इति कूटयोधी जीवः, स त्वं न भवसि । शुद्धविग्रहत्वात् शुद्धज्ञानरूपत्वादित्यर्थः । शुद्धविग्रह इत्यत्र विपूर्वकग्रहिधातोर्ज्ञानार्थकत्वं, तेन परमशिवस्य सर्वजीवानां हृत्पुण्डरीकान्तर्विष्टतया स्वविषयकज्ञानप्रदत्वादत आह—**हरसि मलानीति** । अथवा यस्मात्त्वं शुद्धविग्रहः कलिमलकलुषीकृतस्वान्तानां प्राणिनां त्रित्वाव-च्छिन्न–आणव–कार्मण–मायिकसंज्ञकानि मलानि हरसि नाशयसीति शुद्ध-विग्रहप्रतिपाद्यो भवसीत्यर्थः । पुष्पिताग्राख्यं वृत्तमिदम् । तथा च पैङ्गलं सूत्रम्—पुष्पिताग्रा नौ यौं न्जौ ज्रौ ग् । यस्य प्रथमे पादे नगणद्वयं रगणः यगणः, द्वितीयपादे नगणः जगणः जगणः रगणः गकारश्च भवति तद्वृत्तं पुष्पिताग्रनाम भवतीत्यर्थः ।

**ओम् शाश्वताय नमः ।**

**पूर्वतो जगतो जनेः सर्वसंहारतः परे ।**
**वर्तमाने जगत्यपि त्वमस्येवेति शाश्वतः ॥**

ननु सच्चिदानन्दस्वरूपस्य परमशिवस्य गुणत्रयातीततया देहत्रयातीतत्वं सूचयन् इदानीं कालत्रयातीतत्वमप्यस्तीति अभिप्रायेणाह—**पूर्वतो जगतो जनेरित्यादिना** । जगतः शबलरूपपरमेश्वरस्य परमप्रेमास्पदनानाचमत्कार-विषयीभूतचतुर्विधमूर्त्यवच्छिन्नप्रजालक्षणचतुर्दशभुवनस्य जनेः ईशक्लृप्तपूर्व-क्रमानुसारेण तत्तत्कारणसामग्रीसहायेनोत्पत्तेः पूर्वतः उत्पत्त्यव्यवहितपूर्वपूर्वक्षणे त्वमस्येव इति कारणाच्छाश्वतः । शश्वत् निरन्तरं तिष्ठति शाश्वतः । तत्राण् प्रत्ययः । अत्र श्रुतिप्रमाणम्—

"तत् सृष्ट्वा तदेवानुप्राविशत्"

विश्वतश्चक्षुरुत विश्वतोमुखो
विश्वतो बाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति संपतत्रै-
र्द्यावाभूमी जनयन् देव एकः ॥ इति ।

ननु कार्यस्यापाये कारणस्याप्यपाय इति सामान्यनियमेन ईश्वरस्य जगत्कारणतया जगद्रूपकार्यनाशे कारणस्यापि तथात्वमित्याकाङ्क्षयां समवायिकारणस्यैव तथात्वं, न तु निमित्तकारणस्येत्याशयेनाह—**सर्वसंहारतः परे** इति । हृञ्हरणे इत्यस्माद्धातोः संपूर्वात्संहारशब्दो निष्पन्नः । सर्वस्य अखिलस्य चतुर्दशभुवनस्य संहारः सर्वसंहारः । पञ्चम्यर्थे तसिल् । सर्वसंहारतः परे उत्तरोत्तरकाले विश्वावसानावसरे सर्वं संहृत्य सकलजीवराशिं संगृह्यात्मनि निक्षिप्य वटपत्रशायी भूत्वा त्वमेक एवासीति शाश्वतः ।

अत्र प्रमाणम्—

न द्वितीयो यतस्तस्थे तुरीयं ब्रह्म यत्स्वयम् ।
भूतान्यात्मनि संहृत्य चैको रुद्रो वसाम्यहम् ॥
चतुर्विधेषु देहेषु जीवत्वेन वसाम्यहम् ।
सूक्ष्मो भूत्वाथ हृद्देशे यत्तत्सूक्ष्मः प्रकीर्तितः ॥

कृत्स्नभुवनान्तर्विष्टप्राण्यणुरेणुतृणकाष्ठादिषु वर्तमानत्वादत आह—**वर्तमाने जगत्यपीत्यादि** । वर्तमाने इदानींतनकालीने जगति इदानीमपि विद्यमानत्वाच्छाश्वतपदप्रतिपाद्यो भवसीत्यर्थः । एतेन कालत्रयातीतत्वं प्रतिपादितम् । यथोक्तमुपनिषदि—त्वं कालत्रयातीतः । श्रुतिप्रसिद्धं चेदं नाम । पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमुच्युतम् इति । सैतवस्याखिलेष्वपि इति सैतवाचार्यमतेन अष्टाक्षरपादेषु चतुर्थाक्षरोत्तरं तभजानामन्यतमो गणश्चेत् सैतवाख्यात्मिका विपुला भवति । प्रकृते जगणस्य सत्त्वाज्जविपुला ।

## ओम् खण्डपरशवे नमः ।

**गजासुरवधे खण्डास्तत्र जाताः परशवः ।**
**तदारभ्यखिलैर्देवैर्गीयसे खण्डपरशुः ॥**

पुरा हि परमशिवः दारुकावनस्थचतुर्दशसहस्रसंख्याकऋषिपत्नीः भिक्षाटनव्याजेन व्यामोहयन्नास । अत्रान्तरे ते ऋषयः संक्रुद्धाः सन्तः आभिचारं कार्यमिति बुद्ध्या वेदमयान् मृगव्याघ्रगजादीन् प्रेषयामासुः । तेन गजासुरेण साकं युद्धं चकारेत्याह—**गजासुरवधेत्यादि** । गजाभिधोऽसुरः गजासुरः । गजासुरस्य वधः गजासुरवधः । तस्मिन् ऋषिकोपात्मकवेदमयो वज्रशरीरको गजनामकोऽसुरः तस्य वधे छेदने बहवः, तव ते, परशवः खण्डा जाताः । तदारभ्य सकलैः, समग्रैः देवैः खण्डपरशुरिति गीयसे । अतः खण्डपरशुपदप्रतिपाद्यो भवसीत्यर्थः । चपलाख्यं वृत्तमिदम् । तथा च पैङ्गलं सूत्रम् । चपलायुजोन् । अयुक्पादस्य यदा चतुर्थादूर्ध्वं नकारो भवति, युक्पादे यगण एव तिष्ठति, तदा चपला नाम भवतीत्यर्थः ।

## ओम् अजाय नमः ।

**न जनिः शिव ते । तदसि त्वमजः ॥**

अत्र शिव इति सम्बुद्धिः । शिव इत्यत्र वशिकान्ताविति धातोः पचाद्यच् । पृषोदरादित्वात्साधुत्वम् । वर्णस्य व्यत्यये अकारस्येकारादेशे च शिव इति रूपसिद्धिः । भजतां लोकानां हितं परमामृतरूपं मोक्षं वष्टि इच्छति ददातीति यावत् । हे शिव, त्वं परमामृतरूपः सन् भक्तानां परमामृतरूपमोक्षं ददासीति जन्मादिशून्य इत्यत आह—न जनिः शिव ते इति ।

न कर्मणामनुष्ठानैर्न दानैस्तपसापि वा ।
कैवल्यं लभते मर्त्यः किन्तु ज्ञानेन केवलम् ॥

इति मोक्षं प्रति ज्ञानमेव कारणं न त्वन्यत् । सत्यं ज्ञानमनन्तं ब्रह्म इति श्रुतिप्रसिद्धज्ञानरूपत्वाच्छिव इति नामनिर्वचनेन अमृतरूपापवर्गप्रदत्वेनामृतमोक्षरूपत्वाच्च ते तव जनिः । जनिरुत्पत्तिरुद्भव इत्यमरात् । त्रिगुणावच्छिन्नपञ्चभूतानां परस्परसम्मेलनमांसादिप्रधानस्थूलदेहस्य मातुरुदरात् पतनपूर्वकं भूस्पर्शरूपोत्पत्तिर्न सम्भवति । तत् तस्मात्कारणात्त्वमजोऽसि । तथा च पूर्वोक्तविशेषणविशिष्टत्वेनाजपदप्रतिपाद्यो भवसीत्यर्थः । श्रुतिप्रसिद्धं चेदं नाम । तथा चोक्तम्—

अजामेकां लोहितशुक्लकृष्णां
बह्वीं प्रजां जनयन्तीं स्वरूपाम् ।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः ॥ इति ।

पाञ्चालाख्यं वृत्तमिदम् । तथोक्तमभियुक्तैः —

प्राकृतेष्वष्टभिः पद्यैर्गोकर्णा च शशिप्रभा ।
रामणं चैव पाञ्चालं मृगेन्द्रश्चैव मन्दरः ।
कामलं चैव संज्ञा च वृत्ताष्टकमुदीरितम् ॥ इति ।

प्राकृतेषु सूत्रेषु वृत्ताष्टकमिति प्रकृते च सगणचतुष्टयत्वात्पाञ्चालाख्यं भवतीत्यर्थः ॥

—o—

## अनुबन्धः–२

### शिवनामकल्पलतालवालश्लोकानाम् अकाराद्यनुक्रमणी

## अनुबन्धः–३

### सुधापूरव्याख्यानोल्लिखितग्रन्थाः ग्रन्थकाराश्च

| | | |
|---|---|---|
| अथर्वशिखोपनिषत् | उत्तररामायणम् | गोपथब्राह्मणम् |
| अथर्वशिरः | कामिकागमः | तत्त्वचिन्तामणिः |
| अनेकार्थध्वनिमञ्जरी | कालिदासः | तैत्तिरीयोपनिषत् |
| अभिनववृत्तरत्नाकरः | काशीखण्डः | नानार्थरत्नमाला |
| अमरकोशः | कूर्मपुराणम् | नृसिंहपुराणम् |
| आदित्यपुराणम् | गरुडपुराणम् | पद्मपुराणम् |

पाणिनिसूत्राणि
पिङ्गलसूत्राणि
प्राकृतसूत्रम्
ब्रह्मतर्कस्तवः
ब्रह्मपुराणम्
ब्रह्मवैवर्तपुराणम्
ब्रह्मसूत्राणि
ब्रह्माण्डपुराणम्
ब्रह्मोत्तरखण्डः
भगवद्गीता
भाष्यराजः
भोजराजः
मत्स्यपुराणम्
मन्त्रोपनिषत्
महाभारतम्
माण्डूक्योपनिषत्
मुण्डकोपनिषत्
मृत्युञ्जयध्यानम्
योगयाज्ञवल्क्यम्
योगसूत्रम्
रामायणम्
लिङ्गपुराणम्
वराहपुराणम्
वाग्भटः
वाणीभूषणम्
वातुलशुद्धम्
वामनपुराणम्
वायुसंहिता
वार्तिकराजः
वासिष्ठम्
विश्वकोशः
विष्णुपुराणम्
वृत्तरत्नाकरः
वेदपादस्तवः
शक्तिरहस्यम्
शङ्करसंहिता
शारीरकभाष्यम्
शिवगीता
शिवधर्मः
शिवधर्मोत्तरम्
शिवपुराणम्
शिवरहस्यम्
शिवस्तवः
शिशुपालवधम्
शैवतन्त्रम्
शैवागमः
साङ्ख्यकारिका
साम्बपुराणम्
सुभूतिचन्द्रः
सूतसंहिता
सौन्दर्यलहरी
सौरसंहिता
स्मृतिरत्नम्
हरिवंशम्
हैमव्याकरणम्